ग्रन्थरत्नस्य माहात्म्यं सर्वथा उररीकृतम्। अत्र प्रस्तुता श्रावकभूमिरस्यैव ग्रन्थरत्नस्य त्रयोदशी भूमिः। आचार्यप्रह्लादप्रधानसम्पादिते अभिधर्मसमुच्चये, आचार्यसङ्गो माहायानिकमभिधर्मं समासरीत्या व्याचष्टे। अत इदमपि मन्यते यदस्मिन् ग्रन्थे श्रावकभूमिवर्णिता विषयाः समासेन समाकलिताः। असङ्गकृतित्वेनान्यदेशीयपरम्परासु प्रथिताः महायानसम्परिग्रहशास्त्र-तत्त्वविनिश्चयभाष्य-प्रकरणार्यवाचा- महायानाभिधर्मसङ्गीतिशास्त्र-सन्धिनिर्मोचनभाष्यग्रन्थाः नाद्यावधि गीर्वाणवाण्यामुपलब्धाः प्रकाशमायाता वा।

5. यद्यप्यार्यासङ्गस्याविर्भावकालविषये विद्वांसो विवादमापन्नास्तथापि तस्य गुप्तशासकानां शासनसमये प्रादुर्भाव इत्यत्र न काचन विमतिः। वसुबन्धोरग्रजोऽयमार्यासङ्गश्चन्द्रगुप्तविक्रमादित्ये भुवि प्रशासति (320-400 ई०) ईशवीयवर्षेषु 340 तः 415 ई० पर्यन्तसमयसमीपकाले प्रादुर्बभूवेति प्रदर्शितमस्माभिराङ्ग्लभूमिकायाम्। विस्तरभिया नात्र सन्दर्भादयः सङ्कलय्य प्रदर्श्यन्ते।

6. महायाने दीक्षाग्रहणादर्वागार्यासङ्गपादो हीनयाने सर्वास्तिवादप्रस्थानान्तर्गत-महीशासकनिकायेन स्वमतं दृढीचकार। अस्मिन्निकाये स वैदेहकेन पिण्डोलाचार्येण दीक्षितः सन् नैकान् ग्रन्थान् निबबन्ध। किन्त्वनेन महायाने दीक्षाग्रहणादनन्तरं तत्प्रचारार्थं प्रसारार्थं च नैके ग्रन्था निबद्धा यैः खलु महायानदर्शन-विशदीकरणपुरस्सरं योगाचारनयराद्धान्ताः प्राकाश्यमानीताः। स्वगुरोर्मैत्रेयनाथस्य कृतीष्टीकया विभूष्यानेन योगाचारभूमिशास्त्रं निरमायि यत् खलुयोगाचारदर्शनस्य साधनभूमिप्रकाशः। ग्रन्थेऽस्मिन् योगाचारसाधकस्य चरमलक्ष्यप्राप्तिपर्यन्तं सप्तदशभूमयः मनोमयीत्यादिका निरुपधिकेत्यन्ताः समाकलय्य व्यवस्थापिता यासामन्यत्रैकत्र कुत्रचिदपि उपलब्धसौगतग्रन्थेषु समुल्लेखो नोपलभ्यते। विशकलितरूपेण इतस्ततो द्वित्राः, पञ्चषा, दश वा भूमय उपनिबध्य समाकलिता महायानादिग्रन्थेषु येषु चासामत्र योगाचारभूमावुपनिबद्धानां सप्तदशभूमीनां माहायानिक-योगाचारपरम्परायां परिग्रहस्य सङ्केत उपलभ्यते। चीनदेशीयपरम्पराभिश्चैवं ज्ञायते यदार्यासङ्गादपि प्रागासीद् बौद्धपरम्परासु योगाचारभूमिपरम्परा। तत्र एव बुद्धसिंह—बुद्धभद्रादीनामाचार्याणां योगाचारभूमिग्रन्था आसन्नित्यपि ज्ञायते। एतेनैतदायाति यदाचार्यासङ्गपादः बौद्धयोगाचारभूमिग्रन्थपरम्परया प्रभावितः सन् स्वकृतिं ग्रथयाञ्चकार।

7. आर्यासङ्गपादेन न केवलं निखिलबौद्धशास्त्राणि सम्पूर्णत्वेनाधीतान्यपि तु सकलश्रौतपरम्पराग्रन्था अपि तेन गृहीतार्था इति नात्र काचन विमतिरुचिता। सन्ति तत्र तावदेतादृशा सङ्केता योगाचारभूमिशास्त्रे यैरिदं प्रमाणीभवति यदार्यासङ्गपादैर्बौद्धशास्त्रवत् ब्राह्मणपरम्पराशास्त्राण्यपि सुष्ठ्वधीतानि। शतपथब्राह्मण-

जैमिनीयोपनिषद्ब्राह्मण-ताण्ड्यमहाब्राह्मण-कौषीतकिब्राह्मणप्रभृतिष्वार्षग्रन्थेषु प्रतिपादितानां केषांचिद् विषयाणां श्रावकभूमिवर्णितविषयैः साम्यमुपलभ्यते। बृहदारण्यकोपनिषत्स्थ-मधुविद्यायाः प्रभावोऽपि श्रावकभूमेः कतिपयांशेषु दृश्यत इति यथावसरं प्रदर्शितमस्माभिः। आचार्येण माहायानिकदर्शनग्रन्थास्तु साङ्गत्वेन तत्त्वतो विचारतश्च परिगृहीता येषु लङ्कावतार-ललितविस्तर-समाधिराज-दशभूमक-पितृपुत्रसमागम-प्रतीत्यसमुत्पादादिविभङ्गनिर्देशसूत्र-शालिस्तम्बप्रभृतयो महायानसूत्रग्रन्थाः प्रमुखाः।

सर्वास्तिवादाद्यन्यनिकायग्रन्थार्था अपि तथैव तेन तात्त्विकत्वेन परिगृहीताः। वस्तुतस्तु आर्यासङ्गेन न केवलं बौद्धादिशास्त्राणि अर्थतः परिगृहीतानि, किन्तु तस्मिन् समये प्रचलितानां सकलशास्त्राणां परिज्ञानमसङ्गेन प्राप्तमिति तत्कृतीनामवलोकनेन प्रतिभाति। आयुर्वेदादिशास्त्रपरम्पराज्ञानमपि तद्ग्रन्थानुशीलनाज् ज्ञायते। योगाचारभूमौ प्रस्तुता हेतुविद्या चरक-सुश्रुतसंहितयोरुपलब्ध-तन्त्रयुक्तिविवरणेन तुलनामारोहति। तथैवार्थशास्त्रप्रस्तुता तर्कविद्यापि अत्र प्रस्तुत हेतुविद्याया मूलत्वेनाङ्गीकर्त्तुं शक्यते।

साङ्ख्य-न्याय-वैशेषिक-ज्यौतिष-राजविज्ञान-आन्वीक्षिकीप्रभृतीनि शास्त्राणि तेन सुष्ठु अधीतानीति योगाचारभूमिशास्त्रादवगम्यते। किन्तु आर्यासङ्गपादस्य बौद्धतान्त्रिकपरम्परया एतादृशः कश्चन सम्बन्धो नासीद् येनासौ गुह्यसमाजतन्त्रस्य प्रणेतेति स्वीक्रियेत। यद्यपि तद्ग्रन्थेषु आश्रयपरिवृत्तेरुल्लेखो[1] वर्तते किन्तु तत्प्रपञ्चविगमसूचकमेवेति नात्र कश्चित्सन्देहावकाशोऽपि।

मन्त्रयानवज्रयानयोर्मूले तान्त्रिकविचारे बोधिचित्त-युगनद्ध-वज्ररूपशून्यता-महासुखरूपनिर्वाण-सहजसिद्धि-मन्त्रधारणीप्रयोगादीनां तत्त्वानां तन्त्राभिप्रेतार्थेषु प्रयोगोऽसङ्गकृतिषु नोपलभ्यते। यद्यपि बोधिसत्त्वभूमौ[2] एकत्र बोधिसत्त्वचित्तोत्पादप्रकरणे बोधिचित्तमुल्लिखितम्, तथापि तत्र तन्त्राभिप्रेते तात्पर्ये एव प्रयुक्त एष शब्द इति नावधारयितुं शक्यते। यद्यपि श्रावकभूमौ[3] वज्रोपमसमाधिरपि वर्णितस्तथापि मैत्रेयासङ्गकृतिषु शून्यतापर्यायरूपेण वज्रपदप्रयोगो[4] नोपलभ्यते, न वा तत्र महासुखा-

1. महायानसूत्रालङ्कारभाष्यम् 9/45-46 ; तु० अभिधर्मसमुच्चयः, अभिसन्धिविनिश्चयः, पृ० 106, 19-20 ; शमथविपश्यनयोर्युगनद्धस्योल्लेखोऽपि श्रावकभूमौ समुपलभ्यते,, पृ० 404-5।
2. बोधिसत्त्वभूमिः, पृ० 8; तु०, महायानोत्तरतन्त्रशास्त्रम्, 1/162, 5/1।
3. पृ० 506-510।
4. यथा अद्वयवज्रसङ्ग्रहे, पृ० 23—
   दृढं सारमसौशीर्यमच्छेद्याभेद्यलक्षणम्।
   अदाहि अविनाशि च शून्यता वज्रमुच्यते ॥—उक्तम्; तु०, ज्ञानसिद्धिः, 1/47।

द्वयाकारेण[1] निर्वाणस्य वर्णना प्राप्यते। एवमेव सहजसिद्धि[2]धारण्यादिविषया-नुल्लेखोऽपि आर्यासङ्गपादस्य तन्त्र-परम्परासम्बन्धवैधुर्यमेव प्रतिपादयतीति तस्य गुह्यसमाजतन्त्रस्य तट्टीकाया वा कर्तृत्वं[3] सर्वथाऽपास्तम्।

8. आर्यासङ्गपादैः प्रतिपादिते योगाचारविज्ञानवादे साधनभूमि-विचार-सरण्योः समन्वयो वर्तते। तस्य दार्शनिकराद्धान्तप्रतिपत्तौ एकतस्तु सौत्रान्तिकानां साकारवादनयस्य बाह्यार्थास्तितासिद्धान्तस्य निरसनपूर्वकमालोचनस्य साकाराणां विषयाणामस्तित्वख्यापनस्य च, अपरतस्तु माध्यमिकानां सर्वशून्यताराद्धान्तस्य प्रभावो लक्ष्यते। सौत्रान्तिकानां बाह्यार्थस्य बुद्धयाकारानुमितस्याऽस्तितास्वीकारस्य च योगाचारबाह्यार्थप्रतिषेधसिद्धान्तोपरि प्रभावः संलक्ष्यते माध्यमिकानां शून्यतानयस्य, निःस्वभाव-नैरात्म्यसिद्धान्तस्य च, तत्प्रतिपत्तिसरणेश्च योगाचारविज्ञानवाद-सिद्धान्तप्रतिपत्तिप्रणाल्युपरि प्रभावो दृश्यत इत्यनुमीयते यदार्यासङ्गेन तद्गुरुणा मैत्रेयनाथाचार्यपादेन च योगाचारसिद्धशान्तपुष्ट्यै सौत्रान्तिक-नयाऽङ्गीकृत-बुद्धया कारानुमित-बाह्यार्थास्तित्वसाकारत्वादं माध्यमिकानाञ्च शून्यतानयं समन्वीय योगा-चारविज्ञानवादः सिद्धान्ततो व्यवस्थापितः।

9. असङ्गकृतिषु बौद्धशास्त्राङ्गभूतस्य न्यायशास्त्रस्य हेतुविद्यापरपर्यायस्य परिग्रहोऽपि दृश्यते। यद्यपि बौद्धन्यायस्यादिमस्वरूपं मैत्रेयनाथस्य कृतिषु संभावित-तयोपलक्ष्यते किन्तु तेन हेतुविद्या-प्रतिपादनपरः कश्चिदेवविधो ग्रन्थो निरमायि इति न जानीमहे, न वाद्ययावधि एवंविधः कश्चन ग्रन्थः समुपलब्धो येन तस्य बौद्धहेतु-विद्याप्रवर्तकत्वं प्रामाण्येन व्यवस्थाप्येत। किन्तु परवर्तिषु बौद्धन्यायग्रन्थेषु मैत्रेयनाथ-असङ्ग-वसुबन्धु-दिग्नाग-कुमारनाथप्रभृतीनामाचार्याणां बौद्धन्यायपरम्परावस्थापकत्वेन समुल्लेखो मैत्रेयनाथाचार्यपादानामपि हेतुविद्यापरस्य कस्यचिद् ग्रन्थस्य कर्तृत्वं द्योतयति। अनेन सिद्धान्तप्रतिपत्तिप्रणालीव्यवस्थापनमात्रे तस्य प्रामाण्यमित्यपि स्वीक्रियेत, किन्तु ग्रन्थरचना तु तस्य नैवं स्वीकर्तुं शक्यते, प्रमाणाभावात्। योगाचार-भूमिशास्त्रस्य मूलं यदि मैत्रेयाचार्योपदेशास्तत्प्रतिपादितसिद्धान्ता वा स्वीक्रियेरन् तर्हि

1. तु० अद्वयवज्रसङ्ग्रहः, पृ० 50—
वज्रसत्वं नमस्कृत्य प्रज्ञोपायस्वरूपकम्।
महासुखाद्वयं वक्ष्ये वस्तुतत्वं समासतः ॥;
ज्ञानसिद्धिः, 7/3 : सर्वताथागतं ज्ञानं स्वसंवेद्यस्वभावकम्।
सर्वसङ्ख्याग्रभूतत्वात् महासुखमिति स्मृतम् ॥
2. द्र० सहजसिद्धिः, इण्डो इरैनियन जर्नल, 10. 135-141।
3. यथा प्रत्यपादि विनयतोषभट्टाचार्यमहोदयैः,
ऐन इण्ट्रोडक्शन टु बुद्धिस्ट् ईसोटेरिज्म्, पृ० 54, 126 इत्यादौ।

आर्यमैत्रेयनाथस्य बौद्धन्यायस्य आदिमाचार्यत्वमप्यङ्गीकर्तुं शक्यते। वस्तुतस्तु असङ्गगुरोरभिनिवेशो न तर्के तन्त्रयुक्तौ वाऽऽसीत् संवृतिविकल्पास्पदीभूतत्वादस्य वाग्विशुद्धेर्वादविद्याया वा, अपितु तस्याभिप्रायो व्यक्तमेव परमार्थसाधनपरतयाऽभिव्यक्तस्तद्यथा महायानसूत्रालङ्कारभाष्ये (1-16) 'धर्मस्य प्राप्तिः, प्रत्यात्मं विमुक्तिज्ञान' मित्यादिना आर्यासङ्गेन विस्पष्टं समुदीरितम्।

बौद्धपरम्परायामार्यासङ्गपादेन योगाचारभूमिशास्त्रेऽभिधर्मसमुच्चये च तन्त्रयुक्त्यपरपर्याया हेतुविद्या 'परीक्षाञ्च नयद् विज्ञानं वस्तु। तद्यथा वादो वादाधिकरणं वादाधिष्ठानं वादालङ्कारो वादनिग्रहो वादनिस्सरणं वादे बहुकरा धर्मा,' इति प्रथमबारं चिन्तामयीभूमौ प्रस्तुता। तथा बोधिसत्त्वभूमौ अध्यात्मविद्या हेतुविद्या शब्दविद्या व्याधिचिकित्साविद्या शिल्पकर्मस्थानविद्येति (पृ० ६८) पञ्चविद्यास्थानानि परिगण्य, षड्विधविरोधे (पृ० ६९) वाग्विरोधो युक्तिविरोधश्चोपन्यस्तः। एवमेव चिन्तामयीभूमौ हेतुविद्याप्रकरणे साधनविशदीकरणे पश्चात्कालीनैर्नैयायिकैः अनुमानाङ्गतया स्वीकृतानि प्रतिज्ञाहेतूदाहरणान्यपि सारूप्यवैरूप्याभ्यां सहैव प्रस्तुतानि, तथा प्रत्यक्षानुमानाऽऽप्तागमानां स्वरूपमपि वैशद्येन, विश्लिष्य प्रस्तुतम्। तदेव दिङ्नाग-धर्मकीर्तिप्रभृतिबौद्धन्यायाचार्याणां प्रत्यक्षादिप्रमाणलक्षणस्वरूपनिर्धारकमभूत्। अत इदमपि ज्ञायते यत्प्रत्यक्षानुमानाप्तागमप्रमाणानां लक्षणं बौद्धन्यायपरम्परायां प्रथमत आर्यासङ्गेनैव निर्धारितं तदेव आचार्यवसुबन्धुना दिङ्नागधर्मकीर्तिप्रमुखैश्च परवर्तिभिराचार्यैरङ्गीकृतम्।

10. असङ्गप्रणीतं योगाचारभूमिशास्त्रमतिविपुलमासीत्। उपलब्धयोगाचारभूमिशास्त्रग्रन्थस्तु तस्यैकदेशमात्रमेव। आसीत्तत्र सङ्ग्रहणीचतुष्टयम्- -वस्तुसङ्ग्रहणी, पर्यायसङ्ग्रहणी, विवरणसङ्ग्रहणी, विनिश्चयसङ्ग्रहणी च। एताभिस्सह योगाचारभूमिशास्त्रस्य सप्तदशभूमयो (माहायानिकयोगाचार (भूमि) परम्पराया) अभिधर्मतया योगाचारभूमिविनिश्चयसङ्ग्रहण्या भोटानुवादे आर्यासङ्गोक्तितया व्याख्याताः[1]। एवं सम्पूर्णोऽयं योगाचारभूमिशास्त्रग्रन्थो मूलग्रन्थस्य संग्रहणीचतुष्टयात्मकस्यैकांशमात्रमेवेति निश्चिनुमः।

11. अत्र प्रथमवारं सम्पूर्णत्वेन प्रस्तूयमानायाः योगाचारभूमेरङ्गभूतायाः श्रावकभूमेरुत्तरभारतीय नागरीवर्गीयायां लिप्यां प्राप्ता मातृका शास्त्रस्यास्यान्यभूमय

1. द्र० Alex Wayman, Analysis of the Śrāvakabhūmi Manuscript, Introduction, यत्र भोटानुवादेन सह प्रस्तुतमाङ्ग्लभाषान्तरमित्थं प्रतिपादयति—pp. 32-33, Among them comprisal of "alphabet" (mātṛkā) (i. e., "Abhidharma") means the seventeen bhūmis and the four 'comprisals' (i. e. vastu, paryāya, vivaraṇa, and viniścaya saṃgrahaṇī), see also, p. 42-43.

इव संस्कृतभाषायां लिखिता या खलु सुतरामन्यभूमीनामपि भाषा। यद्यप्यस्यां भूमौ प्रयुक्तः पाठो नैकधा संशोधितोऽस्यां भाषायां लिपिलेखिकस्य प्रमादवशादनेके भाषादोषाः समापतिता ये खलु लेखस्य पालि-माहायानिकसंस्कृत-मागधी-भाषाप्रयोगसंस्कारवशादेवापतिता भवेयुरिति ग्रन्थस्यास्य भाषास्वरूपपरिशीलना-दवगम्यते। अस्य व्याकरणं पूर्णतः पाणिनिप्रोक्तव्याकरणनयानुसारीति नात्र प्राकृतप्रभावः कश्चिदेवंविधः परिलक्ष्यते येनास्या भूमेर्भाषा बौद्ध संकर(?)संस्कृतत्वेन परिगृह्येत। यद्यपि कतिपये धातुप्रयोगा नामप्रयोगा वा लेखकप्रमादवशाच्च्युता दृश्यन्ते किन्तु नैतावन्मात्रेण ग्रन्थस्य भाषाऽपरेति[1] वक्तुं शक्यते। प्रायशस्सर्व एवैते भाषादोषा व्याकरणस्खलितानि वा यथावसरं शोधितान्यस्माभिः।

12. मातृकायामनुपलब्धानामस्य भूमेर्मुख्यांशानां लुप्तानां भोटभाषान्तरात्संस्कृते पुना रचनाऽस्माभिः कृता। अस्याः पाठः प्रथमपरिशिष्टे प्रदत्तमित्याशास्महे न कश्चिदंश एवंविधस्त्रुटितो भ्रष्टो वा वर्तते येनास्या भूमेर्विषयावबोधो अर्थसम्भारस्य वा तात्पर्यावबोधो दुष्करो भूयादिति। विश्वसिमो विद्वन्मूर्धन्यानामधीतिबोधप्रचारण-परम्परयाऽस्य ग्रन्थरत्नस्य भूयानर्थावगमो विस्तरश्च भूयशोऽनेकशश्च भविष्यतीति।

**श्रावकभूमेर्योगसम्भारः**

1. आर्यावर्त्तीयदर्शनानां निखिलेषु प्रस्थानेषु चित्तशोधनक्रमेण परमार्थसाक्षात्कारो मोक्षो निर्वाणं वेति सङ्ख्यां गच्छति। तत्र चित्तशोधनोपायः योगपदेनाभिधीयते। अयं योगः क्वचित्तु जीवात्मपरमात्मनोर्योग इति[2], क्वचिच्च चित्तसमाधानमिति[3], क्वचित् आस्रवनिरोध[4] इति, क्वचिन्निर्जर[5] इति चाख्यातः। श्री अरविन्दमते[6]

1. यथा प्रा० एलेक्स वेमैन् महोदयेन प्रतिपादितम्, तत्रैव, तृतीयोऽध्यायः, पृ. 47-57।
2. पाशुपतसूत्रभाष्यम्, पृ. 6, 110।
3. यो० सू० 1/2।
4. श्रावकभूमिः, पृ० 9, 37—।
5. जैनमते खल्वेवं मन्यते, द्र० स० द० सं०, 3, पृ० 80; द्र० सुखाबोधा तत्त्वार्थवृत्तिः, पृ० 7-8; 176।
6. *The Synthesis of Yoga*, (*Sri* Aurobindo Birth Centenary Library Publication, Vol. 20, p.3). "All methods grouped under the common name of Yoga are special psychological processes founded on a fixed truth of Nature and developing out of normal functions, powers and results which were always latent but which are ordinary movements, do not easily or do not often manifest."

योगोऽयं जीवनस्य मूलतत्त्वत्वेन व्याख्यातो यः खलु चित्तसमाधानस्वरूपतया सामान्यप्रक्रियासम्बद्धोऽपि अव्यक्तशक्तिप्रकाशक-प्रकृति-विकाशपरचैत्तव्यापारतत्त्वत्वेनोपबृंहितस्वरूपो यत्र विश्वात्मजीवात्मनोरैक्यमभेदो वा परिस्फुरति।

निगमेष्वयं योगः सर्वथा चित्तचाञ्चल्यनिरोधकतया व्याख्यातः। तत्स्वरूपञ्च विवृतं तत्र चित्त-करणव्युपशमप्रवृत्तिरूपेण। इन्द्रियाणां लौल्यस्य निवृत्तिः परमार्थाधिगमश्च तत्र प्राधान्येन योगप्रवृत्तिफलम्। पातञ्जलदर्शनेऽयं योगः अप्रतिसङ्क्रमस्वरूपाया अपरिणामिन्याश्चितिशक्तेः स्वरूपस्थितिबोधकतया चित्तस्य व्युत्थानादिसकलावस्थासु वर्तमानानां वृत्तीनां निरोधपरकतया च व्याख्यातः। पाशुपतमतेऽयं योगः आत्मेश्वरसंयोगपरत्वेन व्याकृतः। तदुक्तं पञ्चार्थभाष्ये[1] 'अत्र आत्मेश्वरसंयोगो योगः। स पुनः पुरुषस्याध्ययनादिनैमित्तिकत्वादन्यतरकर्मणः स्थाणुश्येनवत्। चोदनाध्ययनादिवचनान् मेषवदुभयकर्मणः। यस्मात् सति विभुत्वे अनधिकारकृतत्वाद् वियोगस्य। वियुक्तस्यैव च संयोग उपदिश्यते। विषयरक्तविरक्तवत् क्रियायोगे। इह तु समाधिलक्षणे योगे संनियम इति।' तत्र योगपदेन चर्यापरः क्रियायोगो व्याख्यातः।

आर्हतदर्शने कायवाङ्मनस्कर्माणि योगपदेन व्याख्यातानि। त एवास्रवपदाभिहितानि वर्तन्ते येषां संवरनिर्जराभ्यां हानिः सम्पाद्यते। यदुक्तम्—

आस्रवो भवहेतुः स्यान्निर्जरो मोक्षकारणम्।
इतीयमार्हती मुष्टिरन्यदस्याः प्रपञ्चनम्॥[2]

आर्हतविचारवत् सौगतशासनेऽपि योगपदमविद्याऽऽस्रव-संयोजनौघपदवाच्यं चित्तकालुष्यपर्यायतया परिगृहीतम्। एतस्यैव तत्त्वकदम्बकस्य सामान्यं नाम क्लेश इति[3]। अस्यैव क्लेशजालस्य उपशमाय सर्वा सौगतऽऽचारपरम्परा चित्तशोधनसरणिश्चाङ्गीकृता। शीलमेव तत्र विशुद्धिमार्गाङ्गत्वेनाङ्गीकृतम्[4]। एत एव भावा निचितास्तत्र तत्र निकायग्रन्थेषु। तदभिहितं संयुत्तनिकायशासने बुद्धभगवत्पादैरपि—

सब्बदा सीलसम्पन्नो पञ्ञावा सुसमाहितो।
आरद्धविरियो पहितत्तो ओघं तरति दुत्तरन्ति॥
(सं० नि०, पा० टे० सो० 1/53)

तथा धम्मपदेऽपि समुदानीतम्—

सब्बे सङ्खारा अनिच्चा'ति यदा पञ्ञाय पस्सति।
अथ निब्बिन्दति दुक्खे एस मग्गो विसुद्धिया॥ (2/5)

---

1. कौण्डिन्याचार्यरचितं पञ्चार्थभाष्यम्, पृ० 6।
2. अभिधर्मदीपः, पृ० 219-220।
3. सर्वदर्शनसङ्ग्रहः, पृ० 80।
4. द्र० विसुद्धिमग्गो, सीलनिद्देसो।

अयं चित्तोपक्लेशनिवृत्तिपरो विशुद्धिमार्गः ध्यानप्रज्ञासंवलितः चित्तदौष्ठुल्य-विधुरितः निर्वाणगामीति सर्वत्र सौगतसिद्धान्तेषु स्वीकृता सरणिः। मानवानां शीलसमुदाचारेण कर्मविद्याधर्मैर्जीवनस्य चेतसश्च शोधनं भवति। यदुक्तं मध्यमनिकाये—

कम्मं विज्जा च धम्मो च सीलं जीवितमुत्तमम्।
एतेन मच्चा सुज्झन्ति न गोत्तेन धनेन वा'ति॥
(3/262)

2. स्थविरदर्शने शीलप्रतिष्ठितमानवस्य चित्तप्रज्ञाभावनया निर्वाणसमधिगमः स्वीकृतः। तत्र सोपधिशेषनिर्वाणं निरुपधिशेषनिर्वाणञ्चेति द्वितयं समर्थितम्।

अस्यां योगतत्त्वनिरूपणशृङ्खलायां स्थविरसम्प्रदाये प्रामुख्येनैते विषयाः समुपबृंहिताः तेषां निरूपणञ्च कृतं तत्र तत्र ग्रन्थेषु—

चित्तम्, चित्तोपक्लेशः, चैतसिका धर्माः, चित्तोपशमः (चित्तास्रवनिरोधो वा), समापत्तिः, ध्यानचतुष्टयम्, तद्द्वारेण निर्वाणधिगमश्च।[1]

एतस्याः सौगतयोगपरम्पराया मूलं यद्यपि त्रिपिटकेषु विशकलितरूपेण यत्र तत्र समुपलभ्यते किन्तु त्रिपिटकेषु परवर्तिसाहित्यस्थानीयानां ग्रन्थानां वर्णनासु च सम्बद्धरूपेण योगतत्त्वानि संबहुलानि वर्णितानि सङ्केतितानि वा विद्यन्ते। यद्यपि निकायेषु तत्र तत्र समाधिस्थानीयानां धर्माणां चित्तक्षेपलक्षणानां चैतसिकानां च परिग्रहो वर्तते, किन्तु धर्मसङ्गण्यामेव प्रथमं योगतत्त्वानां चैत्तिकशुद्धिनिमित्तानां विधिवत् परिगणनं समुपलभ्यते। समासतो धर्मसङ्गण्यां चित्त-चित्तविक्षेपकरधर्म-चित्तोपक्लेशनिवृत्तिपरधर्म-भावनाप्रहातव्यधर्म-लौकिक-लोकोत्तरसमाध्यङ्ग-बोध्यङ्गानां विस्तरेण विवृतिरनेकशः समुपलभ्यते। धातुकथापुद्गलप्रज्ञप्तौ च चैतसिकधर्मपरिग्रह-पूर्वकं पुद्गलभेदाः परिकीर्तितास्तेषां विशेषाश्च वर्णनविषयतामापुः।

एतच्च बौद्धयोगतत्त्वकदम्बकं परवर्तिषु अभिधर्मकृतिष्वभिधर्मावतारादिषु-विशदरूपेण समुपन्यस्तस्वरूपं सत् कालान्तरे लुप्तप्रायमासीत्। अस्याः परम्पराया विशदः समुपन्यासः बुद्धघोषाचार्याणां विशुद्धिमार्गाभिधाने ग्रन्थे, स्वमूलस्वरूपे लुप्तप्राये उपतिष्याचार्यरचिते विमुक्तिमार्गे च समुपलभ्यते। स्थविरचिन्तनसरणि-मनुसृत्यैतयोर्ग्रन्थयोः शीलविशुद्धि[2]—धुताङ्ग-कर्म्मस्थान-पृथिवीकृत्स्न-शेषकृत्स्न-अशुभकर्मस्थान-षडनुस्मृति-ब्रह्मविहार-आरूप्य-समाधि-ऋद्धिविधि-अभिज्ञा-स्कन्ध - धा-

1. एतदर्थं द्रष्टव्यम्—अनिरूद्धाचार्यरचितोऽभिधम्मत्थसङ्गहो।

2. अस्माभिः 'विमुत्तिमग्गो'-ग्रन्थस्य प्रथमः परिच्छेदः शीलवर्णनात्मकः पालि-भाषायां पुना रचितः।

त्रिन्द्रियसत्य-दृष्टिविशुद्धि-प्रतिपज्ज्ञान-मार्गामार्ग-दर्शनविशुद्धि-प्रज्ञाभावनाकारेण पिटकानुगतयोगचर्याविधीनामुपन्यासः सविशेषतयाऽभिधर्मदृष्ट्या कृतः। निकायार्थकथास्वन्यासु पिटकाङ्गार्थकथासु चाप्याचार्यैरेषामङ्गानां भृशमुपन्यासः कृतः। अत्र मूलत्वेन शीलविशुद्धि-नैरात्म्य-प्रज्ञा-समाधिभावना-चित्तशोधनप्रतीत्यसमुत्पादभावनादितत्त्वानि समुपबृंहितानि। तदुपर्येव योगप्रासादः समुत्थापितः।

अनन्तरं च विभाषामूलमङ्गीकृत्य वसबन्धुराचार्योऽभिधर्मकोशशास्त्रं ग्रथितवान् सङ्घभद्रश्च न्यायानुसारशास्त्रं न्यबध्नात्। अन्यानि अभिधर्मदीप-समयप्रदीपाऽभिधर्मामृताऽभिधर्महृदयादिशास्त्राण्यपि निबद्धानि। सर्वत्रैवात्र स्थविराभिधर्म प्रभावः संलक्ष्यते क्वचिच्च स्वतन्त्रा विचारा अपि प्रकाशिताः। एतेषां योगचर्यासु प्रवृत्ता भेदप्रणाली नात्र विचारणाविषया। किन्तु सर्वत्र लौकिकलोकोत्तरसमाधिशिक्षात्रय-नैरात्म्यभावना-प्रतीत्यसमुत्पादाऽशुभ-प्रज्ञा-दुःखानित्यभावनामूलकमेव चित्तोत्पादनं तत्परिष्कारचर्याविधिश्च प्रामुख्येन समुपबृंहितः।

3. योगाचारपरम्परासु चायं योगचर्याविधिः चित्तशोधनव्यापारप्रणाल्या समुपबृंहितः तत्र शतधर्माश्चैतसिका विवृता[1] येषां परिशोधनेन समवाप्त्या वा चित्तशुद्धिः समुपजायते। योगाचाराणामियं योगप्रणाली महायानसूत्रानुसारिणी दशभूमिपारमितादिनयानुगतेति नात्र काचन वैमत्यदृष्टिः। अनास्रव-धर्मकायावाप्ति-विमलचित्तस्वरूपाधिगमपूर्वकं निर्वाणसमधिगमस्तथतासाक्षात्कारश्च तत्र योगचर्यायाः चरमं फलम्।[2]

योगाचाराणां चर्यासु मूलभित्तित्वेनाऽऽभिधार्मिकाणां चर्यापद्धतिरङ्गीकृता[3]। तस्मात्तेषां सम्प्रदायेऽपि अभिधर्मसङ्ग्रहो वर्तते, तत्र स्वीकृता चर्या प्रायशः स्थविरवैभाषिकचर्याया भिन्ना, यद्यपि तत्र तत्र केचन सिद्धान्तभेदास्समनुगता दृश्यन्त एव।[4]

योगाचारभूमिपरम्परा असङ्गाचार्यात्प्रागपि विद्यमानाऽऽसीदिति चीनदेशीयबौद्धपरम्पराभ्यो ज्ञायते।[5] तत्र सङ्घरक्ष-बुद्धसेनप्रभृतीनामन्येषां बौद्धाचार्याणां

---

1. द्र० शतधर्मविद्यामुखम्, सर्वास्तिवादपञ्चवस्तुकशास्त्रम्, परिशिष्टम्, पृ० 49-50।
2. तु० मध्यान्तविभागः 4/19-22; म० वि० भा०, पृ० 50-5।
3. तु० अभिधर्मसमुच्चयः, प्रह्लादप्रधानसम्पादितः, भूमिका, पृ० 22; Th. Stcherbatsky, Conception of Buddhist Nirvāṇa, Introduction.
4. अ० स० भूमिका, पृ० 22।
5. E. Lamotte, Historie du Buddhisme Indien, p. 772; Alex Wayman, AŚM, Introduction.

योगाचारभूमिग्रन्थानां समुल्लेखः प्राप्यते। योगाचारभूमिपदेनात्र योगाचाराणां प्रक्रियया निर्वाणसमधिगमाय नैकासु भूमिषु साधनचर्यापरिपूरेः समवाप्तव्यतया चर्यायाः परिनिष्ठा तन्मुखेन विमुक्तिलाभो भवतीति ज्ञेयम्। तत्रासङ्गस्य प्रस्तुते योगाचारभूमिग्रन्थे सप्तदशभूमिषु चर्यापरिपूरिं विधाय निर्वाणसमधिगमाय मार्गो देशितो येन विमलचित्तपूर्वकमनास्रवविज्ञानधातोः समधिगमः करणीयः। अत्र सर्वत्र महायानमार्गानुसारेण चर्याऽङ्गीकृता, तत्परिपूरये च साधनमार्गः समनुदेशितः।[1]

मैत्रेयाचार्यपादानां पट्टशिष्यभूत आर्यासङ्गः[2] महायाने दीक्षाग्रहणात् प्राक् सर्वास्तिवादान्तर्गतमहीशासकनिकायमङ्गीचकारेति चीनदेशीयबौद्धपरम्परासु अङ्गीकृतम्।[3] तदनुसारेणैव न तेन योगाचारभूमीनां बोधिसत्त्वभूमेरितरभूमीनां परिवर्णनं चाकारि। किन्तु नैतासु भूमिवर्णनासु कश्चिद् भेदो विशेषो वा संलक्ष्यते येनैतासु महायानविरोधिता हीनयानानुगामिता वा परिदृश्येत। पञ्चविज्ञानसम्प्रयुक्तभूमेः श्रावकभूमिपर्यन्तञ्चासङ्गदर्शनस्य योगाचारीयस्याभिधर्ममूलकता सर्वथा परिलक्षिता भवति। एतद्धि बोधिसत्त्वभूमौ आचार्येण नासकृद् व्यवस्थापितम् यत् श्रावकयाननयेन मूचर्यालं परिगृह्य बोधिसत्त्वः महायानाभिमुखो भूत्वा चर्यासाधनं कृत्वा विमुच्यते।

तस्माच्छ्रावकभूमौ परिगृहीतानि योगतत्त्वानि चर्याङ्गानि च न श्रावकयाननयेनैव सर्वथाऽङ्गीकृतान्यपि तु महायानानुसारिणी हि एषा श्रावकभूमिचर्यापद्धतिः या खलु आभिधर्मिकमूलतया अङ्गीकृता।

श्रावकभूमौ योगसाधनत्वेन परिवर्णितासु वह्वीषु चर्यासु नैके धर्माः परिगणिताः चित्तशुद्धिनिमित्तकाः येषु प्रव्रज्या शीलेन्द्रियसंवरद्वयं च मुख्यतया परिगृहीतानि।[4] परसम्पदि परिगृहीतेषु तत्त्वेषु प्राविवेक्यम्, सम्प्रजानद्विहारिता, निवरणविशुद्धिः,

---

1. Nalinaksa Dutta, Intro. to Bodhisattvabhūmi, pp. 3-7; अस्माकम्, Introduction पृ० 1.

2. ज्ञानश्रीमित्रनिबन्धावली, पृ० 532 :

   आर्यासङ्मनङ्गजिन्नयबहो यद्भूपीशोऽन्धुशाद्
   आचार्यो वसुबन्धुरुद्धुरमतिस्तस्याऽऽज्ञयाऽऽदिद्युतत्।
   दिग्नागोऽथ कुमारनाथविहिता सामान्यसाहायकस्तस्मिन्
   वार्त्तिकभाष्यकारकृतिनोरद्याननद्या स्थितिः॥ Intro. to Śrāvakadhūmi p. 22 किन्तु, द्र० देमेविल्ले, BEFEO, 4, 41, p. 386.

3. Alex Wayman's Analysis of Śrāvakabhūmi Manuscript, p. 25-28 sq., K. Shukla, Intro. to Śrāvakabhūmi, pp. lxviii-lxix.

4. श्रावकभूमिः, पृ० 37-73।

समाधिसन्निश्रयश्चैते धर्माश्चित्तशोधनार्थं स्वीकृताः। तत्र चरमः समाधिसन्निश्रयाख्यो धर्मः चित्तैकाग्रतापरपर्यायः योगसाधनत्वेनाङ्गीकृतः।[1]

श्रावकभूमौ चित्तपरिकर्मनिमित्तत्वेन कतिपये धर्माः परिगृहीताः यैर्योगाचारो योगनिमित्तस्य भावनायै योगमनस्कारमुद्गृह्णाति।[2] ध्यानचतुष्टयसाधनेन भावनया च लोकोत्तरधर्माणां योगी चित्तशोधने दत्तावधानः समाहितचेतसा उपक्लेशान् सर्वान् क्षिणोति श्लथयति च कर्मबन्धनानि। आनुपूर्व्येण स योगी चत्वारि[3] ध्यानानि सम्पाद्य[4] नैकशो धर्मान् 'उत्तरोत्तरान्विशिष्टान् विशिष्टतरान् विशिष्टतमान् प्रत्यग्रानात्मसम्पत्पूर्वान् समाधिसन्निश्रयपर्यवसानान् समुदानयति। एवं परिशुद्धे चित्ते पर्यवदाते अनङ्गणे विगतापक्लेशे ऋजुभूते कर्मण्ये स्थिते आनिञ्ज्यप्राप्ते स चेच्चत्वार्यार्यसत्यान्यारभ्य तेषां परिज्ञायै प्रहाणाय साक्षात्क्रियायै भावनायै परतो घोषमववादानुशासनीं प्रतिलभते। एवमसौ भव्यो भवति प्रतिबलश्च योगनिमित्तस्य मनस्कारस्योत्पादनाय। तत्पूर्विकायाश्च सम्यग्दृष्टेर्यया चत्वार्यार्यसत्यान्यभिसमागच्छति। विमुक्तिञ्च परिपूरयति। निरुपधिशेषे निर्वाणधातौ परिनिर्वाति।' इति तत्र भूयो भूयश्चाचार्येण लौकिकलोकोत्तरवैराग्य-तदुभयसम्भारश्च योगाङ्गत्वेन परिगृहीतः येन योगी दुस्तरं क्लेशजालं छित्त्वा ध्यानं समुद्गृह्णाति।[5] तत्र लौकिकेन मार्गेण चत्वारि ध्यानानि भावयित्वा, लोकोत्तरेण मार्गेण चतुर्णामार्यसत्यानां भावनामुखेन योगी 'त्रैधातुकेभ्यो दर्शनभावनाप्रहातव्येभ्यो धर्मेभ्य आत्मानं विसंयोजयति विमोचयत्येवं चासौ त्रैधातुकसमतिक्रान्तो भवति।[6] सत्कायदृष्टिं प्रहाय योगी परसम्पदङ्गभूतानि कुशलधर्मच्छन्द-शीलसंवर-भोजने मात्रज्ञता-जागरिकानुयोग-सम्प्रजानद्विहारिता-कल्याणमित्रता-सद्धर्मश्रवणचिन्तना-ऽनन्तराय-त्याग-श्रमणालङ्कार-तत्त्वानि चर्याङ्गतया अभ्यस्यति।[7]

अत्र चर्यायां प्रथमं शीलसम्वरसंवृतो योगी भावयति तत्त्वानि यैस्तस्य चित्तं सुविशुद्धं विमलं च सम्पद्यते। भिक्षोरगोचरान् परिवर्ज्य गोचरेषु विहरन् योगी

---

1. तत्रैव, पृ० 14-15।
2. तत्रैव, पृ० 14-16 गोत्रव्यवस्थानांशो द्रष्टव्यः।
3. तत्रैव, पृ० 15, 197। पृ० 306, 404-06, 439, 445-49, तु० प्रथम परिशिष्टे 6 पृष्ठे।
4. द्र० म० म० पं० उमेशमिश्राणामभिनन्दनग्रन्थेऽस्माभिः पुनर्विरचितगोत्रभूमेरंशः पृ० 133-135।
5. श्रावकभूमिः, पृ० 35-386।
6. तत्रैव, पृ० 36।
7. द्र० उमेश मिश्र अ० ग्र० पृ० 131-33, श्रावकभूमिः प्रथमं योगस्थान(म्) श्रावकभूमिः, पृ० 7-16, 37-166।

आचारसम्पन्नः अणुमात्रेष्ववद्येषु भयदर्शी समादाय शिक्षते शिक्षापदेषु ।[1] शीलसंवरवदिन्द्रियसंवरोऽपि चित्तपरिकर्मपद्धतावङ्गीकृतः। इदं च शीलं मूलत्वेन चित्तोपशमस्य धृतम् । तदुक्तम्[2]—

सुप्रतिष्ठितमूलः स्याच्चित्तस्योपशमे रतः ।
संयुक्ता च विसंयुक्ता दृष्ट्यादृष्ट्यार्यपापया ॥

अनेन च क्रमेण कायिकवाचिक-मानसकर्मशोधनमपि भवति। यदुक्तं राहुलमारभ्य भगवता[3]—

कायकर्माथ वाक्कर्म मनस्कर्म च राहुल ।
अभीक्ष्णं प्रत्यवेक्षस्व स्मरन् बुद्धानुशासनम् ॥
एतच्छ्रामणकं कर्म अत्र शिक्षस्व राहुल ।
अत्र ते शिक्षमाणस्य श्रेय एव न पापकम् ॥

शीलसंवरवदेव रागादीनां चित्तानुस्रवणविगमाय, सङ्क्लेशप्रहाणाय इन्द्रियसंवरोऽपि देशितो येन निमित्तग्राहानुव्यञ्जनग्राहयोः प्रहाणं भवति ।[4] तदेव च योगस्य चरमं लक्ष्यभूतं तत्त्वं यस्य पर्यवसितं क्लेशानामप्रवृत्तौ, विरागे, निरोधे, निर्वाणे च भवति । अयमिन्द्रियसंवरस्तत्र द्विधा दृष्टः—प्रतिसंख्यानबलसंगृहीतो भावनाबलसंगृहीतश्च ।[5] अनेन भावितेन निवरणानां विशुद्धिर्भवति आवरणीयेभ्यो धर्मेभ्यश्च चित्तस्य परिशोधना सञ्जायते ।[6]

अस्या आवरणीयधर्मेभ्यश्चित्तपरिशोधनाया अनेकान्यङ्गानि—तद्यथा दक्षिणपार्श्वे सिंहशय्याकल्पनम्, पूर्वरात्रापररात्रौ जागरिकानुयुक्तता, विविधाचारेषु सम्प्रजानद्विहारिता, कल्याणमित्रतासमधिगमः, त्यागादि श्रमणालङ्काराणामभ्यासो येभ्यः चित्तं विगतोपक्लेशं विमलं प्रभास्वरं अनङ्गणं च सञ्जायते ।[7]

विशुद्धं विमलं चित्तं अनेकपर्यायैः निमित्तमुद्गृह्णाति। तानि निमित्तानि विविच्य, गृहीत्वा, परिवर्ज्य, विनीय वा व्याप्यालम्बनपूर्वकं चरितविशोधनमालम्बनं कौशल्यालम्बनं क्लेशविशोधनालम्बनं च भावयितव्यम् ।[8] अस्मिन् विषये अशुभा-

1. तत्रैव, पृ० 40-43 ।
2. श्रावकभूमिः, पृ० 52 ।
3. तत्रैव, पृ० 57 ।
4. तत्रैव, पृ० 63-72 ।
5. तत्रैव, पृ० 73-3 ।
6. तत्रैव, पृ० 13, 399 ।
7. द्रष्टव्यम्—श्रावकभूमेः प्रथमं योगस्थानम् ।
8. श्रावकभूमिः, पृ० 191-258 ।

मैत्री-प्रतीत्यसमुत्पाद-धातुस्कन्धप्रभेद-आनापानस्मृतिभावनामुखेन योगाचारः सर्वधर्मेषु नैरात्म्यभावनां समधिगम्य, तेषां निःस्वभावत्वं सापेक्षत्वमनित्यत्वमशुभत्वं शून्यत्वं च प्रतिपद्यते ।[1] षोडशाकाराऽऽनापानस्मृतिचर्यया योगी चत्वारि ध्यानानि समापन्नो भवति । इयमानापानसस्मृतिराश्वासप्रश्वासनिबन्धनेति पातञ्जलयोगसूत्रेषु 'प्रच्छर्दन विधारणाभ्यां वा प्राणस्ये'[2] ति प्रोक्तस्य आश्वासप्रश्वासप्रश्वासात्मकतां योगचर्यायाः समङ्गीकृत्य योगाचारदर्शनस्थसाधनपद्धतिभूमिराविष्कृतेति व्यवस्थापितम् ।

एतदनन्तरं श्रावकभूमौ चत्वारि योगस्य योगकरणीयानि समाख्यातानि । तद्यथा आश्रयनिरोधः, आश्रयपरिवर्तः, आलम्बनपरिज्ञानम् आलम्बनाभिरतिश्चेति । एतैः 'आश्रयविशुद्धिमधिपतिं कृत्वा सुविशुद्धमालम्बनज्ञानं कार्यपरिनिष्पत्तिकाले प्रवर्तते अभिरतिश्च ।'[3]

योगभावनायाः पक्षद्वयमङ्गीकृत्य आर्यासङ्गेन संज्ञा-बोधिपक्ष्यभावनात्मक-मङ्गद्वयं विवृत्य सांवृतभावानामादीनवसंज्ञां प्रहाणविरागनिरोधसंज्ञाभावनाद्वारेण धर्माणामनित्यत्वं शून्यत्वञ्च समुपपाद्य शमथविपश्यनाकारेण योगभावना व्याकृता ।[4] एतदनन्तरं च सप्तत्रिंशतां बोधिपक्ष्याणां धर्माणामभ्यासः प्रपञ्चितः ।[5] तद्यथा-चतुर्णां स्मृत्युपस्थानानां, चतुर्णां सम्यक्प्रधानानामृद्धिपादानां पञ्चानामिन्द्रियाणां बलानां सप्तानां बोध्यङ्गनामार्याष्टाङ्गस्य च मार्गस्य ।[6]

एतैः चित्तशुद्धिपूर्वकमुपक्लेशानां परिक्षयो भवति चित्तं च प्रगृहीतं वर्तते । श्रुतप्रज्ञाभावनामयीभिरनुपश्यनाभिः सर्वदृश्यं योगी सम्यगेवानित्यतयाऽनात्मतया दुःखतया शून्यतया च निश्चिनोति ।[7] एतस्मिन् प्रसङ्गे चित्तप्रभेदाः तद्धर्माश्च विविधा आख्याता[8] येषां व्याकरणं भावना च चित्तौद्धत्य-दौष्ठुल्ययोर्निवारकमिति क्रमेण सर्वाण्यङ्गानि बोधिपक्ष्यानि भावितानि वर्तन्ते येन शमथविपश्यनाद्वारेण सप्तविधं चित्तचाञ्चल्यव्युपशमनिमित्तकं साधनं चित्तप्रग्रहरूपं समुपलभ्यते । एवमेव च च्छन्द-वीर्य-चित्त-मीमांसा-समाधिभ्य ऋद्धिपादाभ्यासेन चित्तक्लेशविनयः बोधिसमधिगमश्च भवति ।[9]

---

1. तत्रैव, पृ० 202-1 ।
2. योगसूत्रम्, 1/34 ।
3. श्रावकभूमिः, पृ० 283-84 ।
4. पृ० 287-88 तः अग्रे ।
5. पृ० 289-334 ।
6. पृ० द्रष्टव्यम् तत्रैव ।
7. पृ० 292 ।
8. पृ० 294-1 ।
9. द्र० 314-1 ।

प्रसङ्गेन चात्र योगाचाराणां विविधाः प्रभेदाः[1] योगभ्रंशस्य[2] च स्वरूपमप्याख्यातम्। किन्तु नैतत् तादृग् योगसाधनविधौ उपकारकं यादृग् ध्यानचतुष्टयमुखेन साधनचर्याऽऽदिकर्मिकस्य वा पुद्गलस्य चर्या उपकारिका भवति। आदिकर्मिकयोगाचारस्य चर्या च शून्याऽनात्म-दुःखरूपतायाश्च सांवृतधर्माणामुपकारकतया विशदरूपेण व्याकृता।[3]

अस्मिन् योगविषये श्रुतप्रज्ञाभावनामुखेन ध्यानाभ्यासपाटववशात् सातत्यसत्कृत्यकारितया तीव्रच्छन्दतासमुत्पादनेन अभीक्ष्णप्रत्यवेक्षणाद् द्विधा योगबलाधानता लब्धा भवति प्रकृत्यैव च तीक्ष्णेन्द्रियतया, दीर्घकालाभ्यासपरिचयेन च।[4] अस्मिन् योगाभ्यासपाटवे योगिनो वैराग्यभावः जगद्विषयेऽनित्यतादुःखाशुभताशून्यताभावाश्च सततमुपकारकाः सन्तः तस्य क्लेशोपशमाय बोधिसमधिगमाय च समर्था इति नास्ति कश्चित् सन्देहावकाशोऽपि।

एवं श्रावकभूमौ निर्दिष्टस्य योगसंभारस्य-योगसाधनमार्गस्य च न केवलं सौगतयोगसाधनपरम्परायां विशिष्टं स्थानं वर्तते, किन्तु प्रस्थानान्तराङ्गीकृतयोगपद्धतिभ्योऽप्यस्य विशेषो वर्तते। पातञ्जलयोगसाधने ध्यानं योगाङ्गत्वेन परिगृहीतम्, योगस्याष्टावङ्गानि तत्र परिवर्णितानि, सबीजनिर्बीजसमाधिद्वितयञ्च तत्र समर्थितम्, क्लेशकर्मविपाकाशयैरपरामृष्टस्येश्वरस्यापि चर्चा तत्र कृता, किन्तु नात्र कश्चिदीश्वरतत्त्वविशेषः, पुरुषो वाऽऽत्मा वा चितिशक्तिरूपतया चिन्तितः। अत्र तु तथागतदेशिता लौकिक-लोकोत्तर-मार्ग-प्रणाली सांवृतधर्माणां दुःखानात्मशून्याशुभताबोधेन प्रतीत्यसमुत्पादादिभावनामुखेन च प्रवर्तिता निःसरणात्मकेन विधिना समालोच्य परिगृहीता यया निषेधमुखेन क्लेशोपशमनिमित्तः बोधितत्त्वावतारः सम्भवति। एवमेव पाशुपतदर्शने यः आत्मेश्वरसंयोगो योगपदेनाभिहितो सोऽप्यत्र नावश्यकतया प्रवर्तत इति योगाङ्गानां समावेशोऽन्यप्रकारेणैव सम्भवति। नात्र जैनपरम्परास्वीकृत-निर्जरमार्गोऽपि मध्यमाप्रतिपदङ्गतयैव परिगृहीत इत्यस्य योगमार्गस्य मूल्यं महत्वञ्चैताभिर्दृष्टिभिः परिमेयम्।

---

1. पृ० 284-85।
2. पृ० 273-75।
3. द्रष्टव्यम्—तृतीयं योगस्थानम्।
4. श्रावकभूमिः, पृ० 271-72।

प्रथमं परिशिष्टम्

APPENDIX—I

संस्कृतेऽनुपलब्धाशाना भोटभाषान्तरतः

# SANSKRIT RECONSTRUCTION OF THE LIST PORTIONS OF THE TEXT (I. YS.)

## 1. गोत्रभूमिः

॥ योगाचारभूमौ श्रावकभूमिः ॥[1]

रत्नत्रयाय नमः ॥[2]

श्रावकस्य सर्वभूमिसङ्ग्रहस्य पिण्डोद्दानम् ॥[3]
प्रयोगो लौकिको लोकोत्तरो गोत्रश्च पुद्गलाः ।
[श्रावक]भूमिरुद्दिष्टा सर्व्वमेतत् समासतः ॥

। उद्दानम् ॥ ।

नैष्क्रम्यमवतारश्च गोत्रभूमिसमन्वितः ।
भूमयस्तिस्र एता हि भूमिः श्रावकसंज्ञिता ॥
सङ्क्षेपेण इमा एव श्रावकभूमिः कथ्यते ।

तत्र गोत्रभूमिः कतमा । आह । यद्[7] गोत्रम्, गोत्रस्य यद् व्यवस्थानम्, गोत्रस्थानां पुद्गलानां यल्लिङ्गम्, गोत्रस्थो[8] यः पुद्गलः तत्सर्व्वमेकत्यमभिसङ्क्षिप्य गोत्रभूमिरित्युच्यते ।

तत्र गोत्रं कतमत् । गोत्रस्थस्य पुद्गलस्य[10] यो बीजधर्मः । यस्मिन् सति भवति असति न भवति । पुद्गलानां प्रत्ययप्राप्तौ निर्व्वाणं प्राप्तुं, स्प्रष्टुं शक्नोति,

1. Tib. ñanthe/sa/.
2. It seems to be a later addition by the Translator. Such expressions are not found at the beginning of other bhūm is.
3. Tib. sdom b/sa/ = uddānakārikā.
4. Wayman (W), पुद्गलाश्च
5. Tib. omits मार्ग
6. Tib. om its उक्ता and सर्व्वे
7. W. omits यत् in all the four cases.
8. 'च' may be added here : W.—सर्वे च ते गोत्रस्थाः पुद्गलाः.
9. May also be—सर्व्वमेतदेकत्यमभिसङ्क्षिप्य.
10. W. पुद्गलानाम् ।

प्रभवति च ।[1] तस्य गोत्रस्य कति पर्यायनामानि । बीजं धातुः प्रकृतिरिति पर्याय-नामानि[2] भवन्ति ।

तत्र तस्य गोत्रस्य स्वभावः कतमः । तत् कायाद्विशिष्टं, षडायतनेन उपात्तं, धर्मतया[3] प्राप्तम् । अनादिकालात् परम्परया समुदागतम् । एवं भवति । यस्यैतानि[4] गोत्रं बीजं धातुः स्वभावश्च इतीमानि पर्यायनामानि भवन्ति तद् गोत्रमित्युच्यते ।

[तत्र] कतमद् गोत्रव्यवस्थानम् ? तद् गोत्रं स्थूलं[5] सूक्ष्मं[5] वा कथ्यते ।[6] आह । सूक्ष्ममिति कथ्यते । तत् कस्य हेतोः । [यावत्] तस्माद्बीजात्[7] फलं न उत्पादितं[8], फलं न सिद्धं[9], तस्मात् तत् सूक्ष्ममिति[10] कथ्यते ।[11] यदा [च] फलमुत्पा-दितं सिद्धञ्च बभूव[12] तदा यद्बीजं यच्च फलं तदेकत्यमभिसङ्क्षिप्यते[13] तस्मात् तद् गोत्रं स्थूलमित्युच्यते ।[14]

अत्र तद्गोत्रमेकसन्तत्याप्तं[15] वाऽनेकसन्तत्याप्तं वा कथ्यते ।[16] [इति][17] चेद्, आह । एकसन्तत्याप्त[18]मुच्यते । तत् कस्य हेतोः । ये धर्मा लक्षणभिन्नत्वेन वस्तुभिन्न-

---

1. W.—यत्किञ्चिच्च तानि सन्ति यावत्कालञ्च वर्त्तन्ते, यदि तानि गोत्रस्थानां पुद्गलानामानुलोमिकान् प्रत्ययान् प्राप्नुवन्ति शक्तानि तानि भविष्यन्ति, शक्ष्यन्ति च स्प्रष्टुं प्रवेष्टुञ्च (परि) निर्व्वाणम् ।
2. W. omits नाम, may also be पर्यायाः
3. Tib. chos/ñid.
4. Tib. यस्मिन्
5. W. adds वत् (as).
6. W- व्याख्यातम् (–यते)
7. Tib. sa-bon.
8. Tib. b-ska/yed/pa.
9. Tib. dgrub.
10. May also be—उच्यते
11. W. : यावच्च तद्बीजं फलं न जनयति, परिपाचयति (साधयति) वा तत्फलम्, इदं [तावत्] सूक्ष्ममित्युच्यते ।
12. Should be भवति ?
13. Tib. cik-tu-dus-ñe.
14. W. यदा च तत् फलं जनयति परिपाचयति च तत् फलम्, तदा यत्किचिद् बीजं, यत्किचिच्च फलम्, उभे ते सम्बध्येते तस्मात् स्थूलमित्युच्येते । instead प्रतीयते उच्यते ( = to/g/pa/ra/gyu/ro).
15. Tib. tok-pa, W :—सम्बद्धम्, may also be सन्तानाप्तम्, ऐकसन्तानिकम् ।
16. Tib. and W. omit this.
17. W. omits this.
18. May also be—ऐकसन्तानिकम् ।

त्वेन वा प्रवर्त्तन्ते तेषां प्रत्यात्मं सन्ताननानात्वेन नानात्वमवतारनाना [त्वेन नाना][29] त्वं च देश्यते। तस्य बीजस्य तेभ्यः षडायतनेभ्यः पृथक्त्वेन नानात्वलक्षणं नास्ति। अनादिकालात् परम्परया समुदागतानां धर्मतया समुपात्तानां षडायतनानामीदृग्भूतायास्तस्या अवस्थाया गोत्रं धातुः स्वभावश्च इति संज्ञा प्रज्ञप्ति [र्व्यवहारः]।[29] तस्मात्तदेव एकसन्तानाप्त[29]मित्युच्यते।[30]

यदि गोत्रस्थाः पुद्गलाः परिनिर्व्वाणधर्म्मका भवन्ति।[31] अगोत्रस्थाश्च अपरिनिर्व्वाणधर्म्मका दृश्यन्ते[32]। कस्मात् परिनिर्व्वाणधर्म्मकाः पूर्वान्ताच्चिरेण संसरन्तो न परिनिर्वृता [इति][27] चेद्, आह। चतुर्भ्यो हेतुभ्यो न परिनिर्वृताः। कतमेभ्यश्चतुर्भ्यः अक्षणोपपन्नत्वात् प्रमत्तदोषत्वान्, मिथ्योपपन्नत्वादावृतदोषत्वाच्चेति।

तत्र कतमदक्षणोपपन्नत्वम्। यत्र चतुष्कुलेषु सज्जनैः सम्यग्गतैः सत्पुरुषैर्न गन्तव्यम्। कान्तारमनुष्येषु, चौरेषु, म्लेच्छेषु। [तत्रो][33] पपन्ना [ये][29] ते अक्षणोपपन्नाः।

प्रमत्तः[34] कतमः। आह। यत्र चतुर्षु कुलेषु[35] सज्जनैः सम्यग्गतैः सत्पुरुषैः गन्तव्ये मध्यदेशे[36] अचौरमनुष्येष्वम्लेच्छेषु उपपन्नोऽपि[37], सम्भोगसम्पन्नेषु उच्चकुलेषु उपपन्नोऽपि[37], कामेष्वधिसज्जते परिभुङ्क्ते [च कामान्][38] [कामेषु चा][38]ऽऽदीनवं न परिजानाति[39] स प्रमत्त इति कथ्यते।

मिथ्योपपन्नत्वं कतमत्। आह। ईदृशो मध्येषु मनुष्येषूपपन्नपर्यन्तो विकसितोऽपि[40] तीर्थिकदर्शनयुक्तो भूत्वा दानं न भवतीति प्रवृत्त्या, इतो भवान्तरं न ज्ञायत इति न भवतीति पर्यन्तेन विस्तरेण पश्यति कथयति च।[41] तत्तीर्थिकदर्शनमपि बुद्धानामनुत्पादे सद्धर्मद्रष्टृकल्याणमित्राणामभावे प्राप्यते। तन्मिथ्योपपन्नत्वमिति कथ्यते।

29. Tib. omits this.
30. Hereafter W. adds : यावच्च तद्बीजं षडायतनाद्बहिः स्थितं भवति न तावद् भेदलक्षणानि धारयति……… ।
31. Tib. in-la.
32. Tib-ta na.
33. Tib. omits
34. W. suggests प्रमत्तदोषत्वम्।
35. Tib. चत्वारि कुलानि।
36. May also be गन्तव्यस्य मध्यदेशस्य।
37. Tib. उपपन्ना अपि।
38. Tib. om its this.
39. Tib. परिज्ञायते।
40. Tib. विकसितेऽपि।
41, Tib, पश्यन्ति कथयन्ति च।

आवृतत्वं[42] कतमत् । आह । इत्थं मध्येषु मनुष्येषूपपन्नपर्यन्तः पूर्ववद् भवति । लोके बुद्धानामुत्पादो भवति । सद्धर्मद्रष्टृकल्याणमित्राणि चोपलभ्यन्ते । स मूर्खः, विद्या तन्मोहितत्वं, हस्तेन सङ्केतयति, सुभाषितदुर्भाषितानाञ्च धर्माणामर्थं न शक्नोति ज्ञातुम् । आनन्तर्यकर्म करोति च चिरक्लिष्टम् । तदावृतत्वमिति[42] कथ्यते ।

[38][तत्रं] येभ्यो हेतुभ्यो [विकलत्वात्][44] परिनिर्व्वाणधर्मकाणां पुद्गलानां परिनिर्वाणधर्मिणामपरिनिर्वाणधर्मकाणाञ्च पुद्गलानां परिनिर्व्वाणं न भवति, ते कतमे । आह । परिनिर्वाणधर्मकाणां पुद्गलानां परिनिर्वाणं न भवति [तत्र]येभ्यो । हेतुभ्यः [विकलत्वात्][44] परिनिर्वाणधर्मकाः पुद्गलाः न परिनिर्वृताः ते चत्वारस्तद्यथा[45] यदा बुद्धानामुत्पादः, सद्धर्मश्रवणम्, आनुलोमिक उपदेशः अनुशासनप्राप्तिः । तेषां[46] [विकलानां] हेतूनामभावे च कुशलमूलानि परिपक्वानि भवन्ति क्रमशः परिनिर्वान्ति च । अपरिनिर्वाणधर्मकाः पुद्गलास्तु[47] नियतसमूहे स्थितास्तस्मात् निमित्तप्राप्तिः[48] स्याद्वा न वा स्यात् सर्वथा न [ते] परिनिर्व्वाणभाजो भवन्ति । तत्र परिनिर्वाण-धर्मकाणां पुद्गलानां या विकलता भवति, अभावश्च भवति असन्निधिश्च भवति, तदसद्भावे परिनिर्वान्ति ! तस्य कति प्रत्ययाः । आह । द्वौ[49] प्रत्ययौ प्रधानो हीनश्च । प्रधानः प्रत्ययः कतमः । आह । तद्यथा सद्धर्माधिपतेयः परतो घोषः, योनिशश्च मनस्कारः ।[50] हीनः प्रत्ययः कतमः । आह । हीनप्रत्यया बहवः । आत्मसम्पत् । परसम्पत् । कुशलो धर्मच्छन्दः । प्रव्रज्या ।[51] शीलसंवरः । इन्द्रियसम्वरः । भोजने मात्रज्ञता ।[52] पूर्वरात्रापररात्रं जागरिकानुयोगः । सम्प्रजानद्विहारिता ।[53] प्राविवेक्यम् । निवरणविशुद्धिः । समाधिसन्निश्रयश्च ।[54]

तत्र आत्म[55] सम्पत् कतमा । आह । मनुष्यत्वम् । आर्यायतने प्रत्याजातिः ।[56]

---

42. Should be आवृतदोषत्वात्
43. Tib. Zchos-chan.
44. Tib. omits this ; added by us.
45. Tib. तेपि
46. This refers to the four hetus of aparinirvāṇa mentioned above.
47. Tib. omits 'tu'.
48. Tib. tshogs तु,
49. W. adds [आनुलोमिकौ]
50. This is according to W ; Tib. has : अध्यात्मयोनिशकारश्च — nań/gi/tshul/bshin/yid/byad/pa/
51. Tib. : rab/tu/byuń/.
52. Tib. : zas/kyi/tshod/rig/pa/.
53. Tib. suggests also सम्प्रजन्येन चर्या, shes/psin/du s byod/pa/nid/.
54. Tib. sgrib/pa.
55. Tib. m istakes पर for आत्म.
56. Tib, suggests :—मध्यदेशे उत्पत्तिः ।

## गोत्रस्थाः पुद्‌गलाः

### (b) आसन्ने (अन्तिके, Vide, P. 22) पुद्‌गल :

आसन्ने पुद्‌गलः ।[57] कतमः । [आह][58] । अस्ति पुद्‌गलः कालस्यासन्नतया निर्वाणस्यान्तिके । प्रयोगस्यासन्नतया चाप्यस्ति निर्वाणस्यान्तिके । तत्र कतमः कालस्यासन्नतया निर्वाणस्यान्तिके ।[59] कायेऽन्तिमस्थानभावे स्थितः तेन कायेन परिनिर्वाति । तस्मिन् क्षणे आनन्तर्यक्लेशप्रहाणं साक्षात्करोति । [एवं] कालस्यासन्नतया परिनिर्वाणमप्यासन्नम् । योगस्यासन्नतया परिनिर्व्वाणस्यान्तिके[60] कतमः ।[61] यो गोत्रस्थो गोत्रे च प्रतिपन्नः । एतत् सर्व्वमेकत्यमभिसङ्क्षिप्योच्यत आसन्ने पुद्‌गल इति ।

अपरिपक्वः पुद्‌गलः कतमः । आह । यस्य पुद्‌गलस्य[62] स्थित्वा परिनिर्वाणम्, सम्यक्त्वेन[73] निष्क्रान्तश्चर[64]मकायोऽप्राप्तः सोऽपरिपक्वः पुद्‌गलः ।

परिपक्वः पुद्‌गलः कतमः । आह यस्य पुद्‌गलस्य[62] स्थित्वा, परिनिर्वाणम्, सम्यक्त्वेन[63] निष्क्रान्तश्चरमकायः समुदागतः स परिपक्वः पुद्‌गलः ।

अविशुद्धः पुद्‌गलः कतमः । आह । येन पुद्‌गलेन आर्यमार्ग उत्पादितस्तत्फलञ्च [यत्][65] तन्न साक्षात्कृतम् । सोऽविशुद्धः पुद्‌गलः । विशुद्धः पुद्‌गलः कतमः । आह । स एतद्विपरीतत्वेन वेदितव्यः ।

सर्व इमे गोत्रस्थाः पुद्‌गला इति वेदितव्यम् । तद्यथा ये अनिष्क्रान्तास्तेषां प्रविष्टीकरणम् । प्रवेशः, ये परिपक्वास्तेषां परिपाकः, ये विशुद्धास्तेषां सर्वेषां विशुद्धिः । एषामर्थाय बुद्धा भगवन्तो लोक उत्पद्यन्ते धर्मचक्राणि च प्रवर्त्तयन्ति, शिक्षावस्तूनि च प्रददति ।

स्वभावस्तद् व्यवस्थानं लिङ्गं पुद्‌गल एव च ।
गोत्रभूमिरिहज्ञेया सर्व्वमेतत् समासतः ॥[66]

॥ श्रावकभूमौ गोत्रभूमिः समाप्ता ॥

---

57. This portion is also not available in the MS., the text hereafter is lost in the original, but preserved in the Tibetan (and Chinese) translations, on which this reconstruction is based.
58. Tib. Adds here यः
59. Tib. अन्तिकत्वम्
60. Tib. omits एवम्
61. [ पुद्‌गलः ] may be added before कतमः
62. Tib. यस्मिन् पुद्‌गले.
63. May also be सम्यक्तया.
64. May also be प्रविष्टः, Tib : nespala' jug/pa.
65. Tib. omits this.
66. This reconstruction is based on the Tibetan Version of the text preserved in the Tibetan Tripiṭaka, Vol. 110, P. 35 sq. ed. by Prof. D. T. Suzuki, Tokyo-Kyoto, 1957.

## 2. अवतारभूमिः

अवतारभूमिः कतमा । आह । योऽवतारस्वभावः, अवतारस्य यद्व्यवस्थानम्[1], अवतीर्णानां पुद्गलानां यानि लिङ्गानि, ये चावतीर्णाः पुद्गलास्तत्सर्व्वमेकत्यमभिसंक्षिप्यावतारभूमिरित्युच्यते ॥

तत्र अवतारस्वभावः कतमः । [आह] अत्र गोत्रस्थाः पुद्गलाः ये परिनिर्वाणधर्मकाः[2] ते यदा बुद्धानामुत्पादो भवति, [तत्र][3] ये मध्यदेशीया मनुष्या अचौरा अम्लेच्छाः इति पूर्व्ववद्विस्तरेण उत्पन्ने सति प्रथमत एव बुद्धानां बुद्धश्रावकाणाञ्च दर्शनम्, समीपगमनम्, उपासनं प्राप्नुवन्ति, तेभ्यो धर्मं श्रुत्वा, प्रथमतः श्रद्धाप्राप्ताः शीलं सम्यगुपपादयन्तः श्रुतग्रहणं कुर्व्वाणाः त्यागं वर्धयन्तः दर्शनाभ्यासं कुर्व्वन्ति । तदनन्तरं[तैः]सद्धर्मपरिग्रहाय हेतुप्रत्ययमुखेन कायच्युतौ व्यतीतेऽप्यायुषि विपाकषडायतनोपात्तविशिष्टमिन्द्रियं समुपलभ्यते[3a] । तस्य तत्सर्व्वं सम्यक् श्रद्धा, सूक्ष्मं सम्यक् शीलसमादानम्, श्रुतग्रहणम्, त्यागवर्धनं दर्शनाभ्यासः [च ये भवन्तीमे] प्रधानचरमभूतानामप्याश्रया भविष्यन्ति ।

श्रद्धादीनां धर्मा उत्तमप्रधानचरम[4]भूता ये तेऽपि अन्यसम्यग्विपाकानामाश्रया[5] भविष्यन्ति ।

तेऽपि विपाका लोकोत्तर[6]धर्माणामानुलोमिका अन्येषां कुशलधर्माणा[7]माश्रयभूताः ।

एवमेव एकस्य हेत्वाश्रयौ एकोभूतौ दानबलोत्पादनेन उत्तरोत्तरेण यस्मिन् स्थिते परिनिर्वान्ति[8] सम्यक्त्वेन निष्क्रम्यमाणत्वात् चरमस्यान्त्यस्य कायस्य प्राप्तिपर्यन्तं विशिष्टोत्पत्ति यद् गमनं तदेवावतार इत्युच्यते ॥

---

1. Suggested by the context ; Tib. reads, अवतारव्यवस्थानम् ।
2. Tib. परिनिर्वाणबीजधर्मयुक्ताः
3. Added by us.
3a. Tib. hthob/ha/.
4. Tib. Thapr/gyurp/=परमभूत.
5. आश्रय is meant here for निर्वृंतिविशिष्ट इन्द्रियस्याश्रयः इन्द्रिय is kind of a विपाक.
6. Tib. jigtan/shthsphi/chos/
7. Tib. omits 'dharmāḥ'.
6. कतमत् precedes अवतार in Tib.
7. A-t परिपक्वीकरणम्
8. A-t विपाकः, Tib. yons/sumya/lsa' das ba/.

[तत्र][3] अवतारव्यवस्थानं कतमत् ।[6] गोत्रं भवति । अवतारो भवति, विपक्वीकरणं[7] भवति, परिपाको[8] भवति । अवतार एव भवति । परिपक्व एव न भवति । परि[वि]पाकीकरणं न भवति, परिपाको[क्वोऽ]पि न भवति । अवतारोऽपि भवति परि[वि] पक्वीकरणमित्येवमपि[10] भवति । अपरिपक्वोऽपि भवति । अवतारो भवति, परिपक्वोऽपि भवति अपरिपाकी [विपक्वी] करणमपि भवति । अवतारोऽपि न भवति । वि [परि] पक्वीकरणमपि न भवति । परि [वि] पक्वो [पाकोऽ]पि न भवति ।

तत्र गोत्रं कतमत् । आह । पूर्ववत् । तत्र अवतारः कतमः । गोत्रस्थपुद्गलेन पूर्व्वतथागत प्रवेदिते धर्मविनये श्रद्धा प्राप्तेन प्रथमत्वेन श्रद्धा प्रभवति ।

यत्समादानशीलम्, यच्छ्रुतिग्रहणम्, यत् त्यागवर्द्धनम्, यो दर्शनाभ्यासश्च सोऽवतार इत्युच्यते ।

विपाकी [पक्वी] करणं कतमत् [विपाकः कतमः] । इत्थं स एव प्रतिपन्नः[11] पुद्गलः यस्मिन् स्थिते परिनिर्वाति सम्यक्त्वेन निष्क्रम्यमाणस्य चरमस्यान्त्यस्य कायस्य प्राप्ति विहाय अवतीर्णस्य[12] उत्तरोत्तरेण यदुत्पन्नमत्यन्तोत्तमेन्द्रियं प्रधानमुत्तममत्यन्तविशिष्टं शीलसमादानं यद् भवति तत् परि[वि]पाक एवोच्यते ॥[12a]

तत्रावतार ( अवतीर्ण ) एव भवति परिपक्वीकरणमेव च न भवति विपाकोऽपि न भवतीति कतमत् । [ आह ][3] तथागतप्रवेदिते धर्मविनये प्रथमतः श्रद्दधाति, दर्शनाभ्यासं च करोति पर्यन्तप्राप्तोऽपि भवति, तदूर्ध्वं एकमन्त्रस्य जन्मनोऽपि उत्पादोऽभिनिहरणं यस्य न भवति सोऽवतारः ( अवतीर्णः ) सएवं भवति विपक्वीकरणमपि न भवति विपाकोऽपि न भवति ।

तत्र अवतारोऽपि भवति विपक्वीकरणमपि भवति विपाको न भवतीति कतमत् । [ आह ][3] तथागतप्रवेदिते धर्मविनये प्रथमतः श्रद्दधाति, दर्शनाभ्यासं च करोति पर्यन्तप्राप्तोऽपि भवति । तदूर्ध्वमेकस्मिन् भवे द्वयोर्वा प्रभूतेषु वा [ कुशलमूलानाम् ][4] अभिनिर्हरणं भवति । परन्तु यस्मिन् स्थिते परिनिर्वास्यमानस्य सम्यक्त्वेन परिनिर्वास्यमानस्य चरमस्यान्त्यस्य कायस्य येनाप्राप्तिः सोऽवतारोऽपि भवति परिपक्वीकरणमपि भवति परिपाको न भवतीति ॥

---

9. A-t. विपक्व.

10. Tib. करणमेवापि.

11. A-t. अवतीर्णः,

12. A-t. प्रतिपन्नस्य.

13. It seems that the Tib. omits the description of परिपक्व पुद्गल.

तत्रावतारोऽपि भवति परिपाकोऽपि भवति अपरिपक्वीकरणं न भवतीति कतमत् । तद्यथा ।[13] इत्थं प्रतिपन्नेन तेन पुद्गलेन यत्र स्थिते परिनिर्वास्यते सम्यक्त्वेन परिनिष्क्राम्यते । चरमोऽन्त्यः कायो यः प्राप्तो भवति सोऽवतारोऽपि भवति परिपाको भवति[14] अविपक्वीकरणं न भवति ॥

तत्रावतारोऽपि न भवति परि( वि )पक्वीकरणमपि न भवति परि (वि) पाकोऽपि न भवतीति कतमत् ( : ) । तद्यथा परिनिर्वास्यमानः धर्मी पुद्गलो यो गोत्र एव स्थितो अप्रतिपन्नो भवति स पुद्गलः प्रतिपन्नो न भवति विपक्वीकरणपि [ तस्य ] न भवति ( अ )[15] परि ( वि ) पाकोऽपि न भवतीति। तर्हि सोऽवतारस्य परिपाकस्य[16] भागी भवति ।

पुद्गलस्य अवतारः परिपच्यमानस्य [ स ] भागो[17] न भवतीत्यपि[16] भवति । तद्यथा । परिनिर्वास्यमानस्य धर्मिणः पुद्गलस्य यद्गोत्रं नास्ति तदेवावतारस्य परि ( वि ) पच्यमानस्य अत्यन्ता [ स ] भागं भवति । परिनिर्वास्यमानस्य भागोऽस्तीत्यपि भवति ॥[19]

तत्रावतीर्णाः पुद्गलाः कतमे । तद्यथा । ........ ........................

---

13. Tib. omits तद्
14. Tib. omits 'अ'
15. This should be omitte
16. Tib. परिपच्यमानस्य ।
17. Tib. Skal/ba/
18. Tib. omits इति ।
19. The followiug a-t. may also be suggested :
    अवतीर्णः = प्रतिपन्नः
    विपक्वीकरणं = निष्क्रमणं, निष्क्रान्तिः
    अवतारः may be replaced by अवतीर्णः or प्रतिपन्नः (at some places)

## द्वितीयं परिशिष्टम्

## APPENDIX II

## श्रावकभूमिस्थाः कारिका

## VERSES OCCURRING IN THE ŚBh.

P. 29 अवतीर्णं च पुद्गलं सन्धायोक्तं भगवता--

1. सम्यग्दृष्टिरधिमात्रा लौकिकी यस्य विद्यते ।
अपि जातिसहस्राणि नासौ गच्छति दुर्गतिम् ॥

P. 32 ॥ उद्दानम् ॥

2. स्वभावस्तद्व्यवस्थानं लिङ्गं पुद्गल एव च ।
अवतारभूमिर्विज्ञेया सर्व्वमेतत् समासतः ॥

P. 52. क्वचित्पुनर्भगवता शीलं मूलार्थनोक्तम् । तथोक्तम्—

3. सुप्रतिष्ठितमूलः स्याच्चित्तस्यौपशमे रतः ।
संयुक्ता च विसंयुक्ता दृष्ट्यादृष्ट्यार्यपापया ॥

P. 57 यथोक्तं भगवता आयुष्मन्तं राहुलमारभ्य ।

4. कायकर्माथ वाक्कर्म मनस्कर्म च राहुल ।
अभीक्ष्णं प्रत्यवेक्षस्व स्मरन् बुद्धानुशासनम् ॥

5. एतच्छ्रामणकं कर्म अत्र शिक्षस्व राहुल ।
अत्र ते शिक्षमाणस्य श्रेय एव न पापकम् ॥

P. 63 ॥ उद्दानम् ॥

6. विभङ्गस्त्रिविधो ज्ञेयः सम्पद् दशविधा भवेत् ।
पर्यायश्च षडाकारो विशुद्धिस्त्रिविधा मता ॥
अनुशंसो दशविधः एषोऽसौ शीलसम्वरः ॥

P. 166 ॥ उद्दानम् ॥

7. स्यादात्मपरसम्पत्तिच्छन्दः शीलेन्द्रियस्तथा ।
भोजनं चैव जागर्या सम्प्रजानद्विहारिता ॥

8. चैव तथा सद्धर्मश्रवणचिन्तना ।
अनन्तरायस्त्यागश्च अलंकारेण पश्चिमः ॥

9. श्राद्धोऽशठोऽल्पाबाधवीर्यः प्रज्ञाऽल्पेच्छता सन्तुष्टिः सुपोषता ।
सुभरता धुतप्राणादिकमात्रता क्षान्तिः सौरभ्यपेशला ॥

P. 169. 10. लौकिकं चैव वैराग्यं तथा लोकोत्तरेण च ।
तयोश्चैव हि सम्भारो भूमिर्नैष्क्रम्यसंज्ञिता ॥

P. 200. ॥ तत्र गाथा ॥

11. निमित्तेषु चरन् योगी सर्वभूतार्थवेदकः ।
बिम्बध्यायी साततिकः पारिशुद्धिं विगच्छति ॥

P. 201. ॥ पुनरपि चोक्तं भगवता ॥

12. चित्तनिमित्तस्य कोविदः प्रविवेकस्य च विन्दते रसम् ।
ध्यायी निपकः प्रतिस्मृतो भुंक्ते प्रीतिसुखं निरामिषम् ॥

P. 348 उद्दानम् ॥

13. पुद्गलास्तद्व्यवस्थानमथो आलम्बनेन च ।
अववादश्च शिक्षा च तथा शिक्षानुलोमिका: ॥

14. योगभ्रंशश्च योगश्च मनस्कारश्च योनिशः ।
करणीयं भावना च फलं पुद्गलपर्यायः ॥
मारश्च मारकर्माणि आरम्भो विफलो भवेत् ॥

P. 376. ॥ अपि च ॥

15 आयुरूष्माथ विज्ञानं यदा कायं जहत्यमी ।
अपविद्धस्तदा शेते यथा काष्ठमचेतनम् ॥

P. 405 ॥ अनन्तरोद्दानम् ॥

16. निमित्तग्राहपर्येष्टिः प्रत्यवेक्षामुखानुगा ।
अर्थतस्तु लक्षणैः पक्षैः कालैश्च सह युक्तिभिः ॥

17. अनुरूपस्तथाभ्यास आशैथिल्याद् विपर्ययः ।
कालोपलक्षणा तुष्टिरवैधुर्यप्रयोगता ॥

18. सम्यक्प्रयोगता चैव नवाधारा द्विधा मता ।
स्वभावतो निदानाच्च तथादीनवदर्शनात् ।
प्रविभाविता चैव शुद्धिरावरणस्य हि ॥

P. 434 ॥ पिण्डोद्दानम् ॥

19. उपसंक्रमणं या च हर्षणा पृच्छनैषणा ।
विनियोगरक्षोपचयः प्राविवेक्यभवैकता ॥
आवरणशुद्ध्युत्कृष्टेह मनस्कारस्य भावना ॥

पुनः ॥

P. 510 20. प्रयोगनिष्ठाकृत्युत्तरफलः पश्चिमो भवेत् ।
मनस्कारश्च, ध्यानानामारूप्याणां विभागता ॥

P. 510 21. लक्षणप्रतिसंवेदी स्यात्तथैवाधिमोक्षिकः ।
प्राविवेक्यरतिग्राही तद्व्यामीमांसकः ॥

P. 511 22. समापत्तिरभिज्ञाश्च उपपत्तिश्च लिङ्गता ।
सत्यानां व्यवचारश्च प्रतिवेधस्तथैव च ॥
भावनाया विभंगश्च निष्ठा भवति पश्चिमा ॥

## तृतीयं परिशिष्टम्

## APPENDIX—III

# HETUVIDYĀ OF ASAṄGA ( FROM श्रुतमयीभूमि )

## हेतुविद्या

2b-6 [3] **हेतुविद्या कतमा।** परीक्षाश्च नयद्विज्ञानं वस्तु। तत्पुनः क [4]-तमत्। तद्यथा वादः वादाधिकरणं वादाधिष्ठानं वादलङ्कारः वादनिसरणं वादे बहुकरा धर्माः।

**वादः** कतमः। स षड्विधो द्रष्टव्यः। वादः प्रत्यय[ा]ववादः [प्रवादः] विवादः अपवादः अनुवादः अववादश्च।

**वादः** कतमः [1] सर्व्ववाग्व्याहारो वाग्भाषो वाग्नि [ङ्न्] रुक्तिर्वाद इत्युच्यते।

**प्रवादः** कतमः। यो लोकाश्रवि [यि] ? को [5] वादः।

**विवादः** कतमः। कामान्वा आरभ्य स्वपरिगृहीतेषु कामेषु परपरिगृहीतेषु कामेषु परेषामाच्छेत्तुकाम इष्टसत्त्वपरिगृहीतेषु कामेषु परेषामाच्छेत्तुकाम इष्टसत्त्व-परिगृहीतेषु कामेषु आच्छिद्यमानेषु आच्छेत्तुकामस्य वा, अपरिगृहीतेषु कामेषु तद्यथावदानकर्त्तक-हासकलासकाद्युपसंहिते[6]षु वा पुनः संदर्शनाय वा-उपभोगाय वा इति। यदेवंप्रकारेषु कायेषु अवीतरागाणां सत्त्वानां कामरागरक्तानामध्यवसान-हेतोर्विपत्त्यहेतोः परिग्रेध[ग्रह ?]हेतोः संरागहेतो (:) संरब्धानां विगृहीतानां विवादमापन्नानां नानावादो विवादो विप्रत्यनीकवादो दुष्चरितं वा पुनरारभ्य स्वयंकृते कायदुश्चरिते वाग्दुश्चरि [7] ते परैरनुयुज्यमानः परकृते कायदुश्चरिते वाग्दुश्चरिते यदाऽयं जन इष्टसत्त्वकृते कायदुश्चरिते वाग्दुश्चरिते कर्त्तुं प्रणिहितस्य इति। यदेवं प्रकारे दुश्चरितसमाचारे-अधिगतदोभा[षा]ना[णा]मविगतद्वेषाणाम[8]धिगतमोहानां लोभद्वेषमोहाभिभूता[ना]मध्यवसानहेतोर्विनिबन्धहेतोः परिग्रेधहेतोः संरागहेतो-रन्योन्यं संरब्धानां संज्ञिष्वभिन्नताहेतोः[1] विगृहीतानां विवादमापन्नानां नाना वादो विवादो विप्रत्यनीकवादः दृष्टि वा पुनरारभ्य त 2A·7 [1] द्यथा सत्कायदृष्टि विषमहेतुदृष्टि शाश्वतदृष्टिम्वार्षगण्यदृष्टि मिथ्यादृष्टिमिति। या वा पुनरन्यापायिका [क्री] दृष्टि इ [दृष्टिरि] त्येवं भागीय दृष्टिसु स्वपरिगृहीतासु परैर्विच्छिद्यमाने परपरि-गृहीतासु परान्विच्छिन्दयतः। इष्टसत्त्वपरिगृहीतासु परैर्विच्छिद्यमानस्य वा विच्छिन्द-

---

1. Letters indistinct.

यतो [विच्छेदयतो] वा अपरिगृहीतासु वा पुनः परिगृहीतकामता[2]मुपादाय अवीत-रागाणां सत्त्वानां पूर्व्ववद् यावन्नानावादो विवादो विप्रत्यनीकवादः अयमुच्यते विवादः।

**अपवादः** कतमः [1] संरब्धानां संक्लिष्टचेतसामन्योन्यमुत्सृत्याविप्रकृ[त]तां कथायाः पारुष्योपसंहितः असभ्योपसंहितः संभिन्नप्रलापोपसंहितो वादः यावद्दुराख्याते धर्म्मविनये धर्मदेशनासांकथ्यविनिश्चयः[3]अपवादानुशासनम् । अयमुच्यते अपवादः ।

**अनुवादः** कतमः । या [यः] स्वाख्याते धर्मविनये धर्म्मदेशनासांकथ्यविनिश्चयोप-शासनमुत्पन्नस्य संशयच्छेदाय [यः] गम्भीरस्यार्थपदस्य प्रतिवेधाय ज्ञ[1]नदर्शनस्य शुद्धये । मोषस्यानुकूलः आनुलोमिको वादः तस्मादनुवाद इत्युच्यते । अयमुच्यते अनुवादः ॥

**अववा[4]दः** कतमः । अधिचित्ते अधिप्रज्ञे प्रयोक्तुकामस्य पुद्गलस्यासमा-हितस्य वा चित्तस्य समाधानाय समाहितस्य वा चित्तस्य विमोक्षाय यो वादः तत्त्वज्ञ[ा]नावबोधाय तत्त्वज्ञ[ा]नावगमाय वादः तस्मादव वाद इत्युच्यते [1] अयमुच्यते अववादः [1]

एषां षण्णाम्वा[षण्णां वा] दानां कति वादा भूतास्तत्त्वा अर्थोपसंहिताः सेवितव्याः । कति वा[5]दाः अभूताः अतत्त्वा अनर्थोपसंहिताः परिवर्जयितव्याः [।]

द्वौ पश्चिमौ वादौ भूतौ अर्थोपसंहितौ वेदितव्यौ । द्वौ मध्ये वादौ अभूतौ अतत्त्वौ अनर्थोपसंहितौ वर्जयितव्यौ [।] आद्ययोर्द्वयोर्वादयोर्भेदः । 10 ॥

**वादाधिकरणं** कतमत्तदपि [कतमत्[1]तदपि] षड्विधं द्रष्टव्यं[।]तद्यथा राजकुलं युक्तकुलं पर्षत्सभा धर्मार्थकुशल[ा] : [6] श्रमणा ब्राह्मणा धर्मार्थकामाश्च सन्ताः [सन्तः] ॥ 0 ॥

**वादाधिष्ठानं** कतमत् । तद्दशविधं द्रष्टव्यम् । साध्योऽर्थो द्विविधः । साध्यस्यार्थस्य साधनमष्टविधम् ।

साध्यो[ऽ]र्थो द्विविधः कतमः[1] स्वभावो विशेषश्च । तत्र स्वभावः साध्यः सच्च सतः असच्चासतः । विशेषः साध्यः, सोत्तरश्च सोत्तरतोनुत्तरं चानुत्तरतः । नित्यो नित्यतः अनित्यः 2B-7[1] अनित्यतः रूपी रूपितः अरूपी अरूपितः[।]यथा रूपी अरूपी तथा सनिदर्शनः अनिदर्शनः, सप्रतिघः अप्रतिघः, सास्रवः अनास्रवः, संस्कृतः असंस्कृत इत्येवमादिना प्रभेदनयेन ॥ विशेषस्य साध्यता द्रष्टव्या ।

**साधनमष्टविधं कतमत् । प्रतिज्ञा, हेतुः, उदाहरणं, सारूप्यं, वैरूप्यं प्रत्यक्ष-मनुमान [2]म[ा]प्तागमश्च ।**

**प्रतिज्ञ[ा]**कतमा [।] द्विविधं साध्यमर्थनारभ्य यः अन्यो[ऽ]न्यं **स्वपक्षपरिग्रह[णं] शास्त्रपरिग्रहणं वा** स्वप्रतिभानतो वा, परानुग्रहतो वा, स्वपक्षावस्थानतो वा, परपक्ष-दूषणतो वा, पराभिभवतो वा, परपरिभवतो वा, परानुकम्पनतो वा [।]

**हेतुः** कतमः [।] यस्तस्यैव प्रतिज्ञार्थस्य सिद्धये उदाहरणाश्रितः सा [2] रूप्यवै-रूप्यतो वा प्रत्यक्षतो वा, अनुमानतो वा, आप्तागमतो वा **हितो[हेतुः]युक्तिवादः** [।]

**उदाहरणं** कतमत्। यस्तस्यैव प्रतिज्ञ[ा]द्व[त]स्यार्थस्य सिद्धये हेत्वाश्रयो लोकोचितप्रसिद्धवस्त्वाहरणोपसंहितो वादः।

**सारूप्यं** कतमत्। यत्कस्यचिद्धर्मस्य सादृश्येन कस्यचिदेव सादृश्ये तत्पञ्चविधं द्रष्टव्यं[।]लिङ्गसादृश्यं, स्वभा[4]वसादृश्यं, कर्मसादृश्यं, हेतुफलसादृश्यं च।

**लिङ्गसादृश्यं** कतमत्। यद्वर्त्तमानेन वा पूर्वदृष्टेन वा चिह्ननिमित्तसम्बन्धेन[च] ना[ऽ]न्योन्यसादृश्यं ।]**स्वभावसादृश्यं**[1] कतमत्[।]यदन्यो[ऽ]न्यं लक्षणसादृश्यं। **कर्मसादृश्यं** कतमत्। यदन्यो[ऽ]न्यं कारित्रसादृश्यम्। **धर्मसादृश्यं** कतमत्। यदन्यो[ऽ]न्यं धर्मतया सादृश्यम्। अनित्ये दुःखधर्म्म[ऽ]ज[ा]तिधर्म्मकाणां जराधर्म्मताया जराधर्म्मकाणां मरणधर्म्मताया मरणधर्म्मकाणां रूप्यरूपिसनिदर्शनानिदर्शनसप्रनिध[ा]प्रतिघसास्रवा-नास्रव-संस्कृतासंस्कृतधर्म्मतया एवं भागीयया धर्मतया[।]**हेतुफलसादृश्यं** कतमत्। यदन्यो[ऽ]न्यं [6] हेतुतः फलतश्च निष्पादनानिष्पत्तिसादृश्यं इदमुच्यते सारूप्यम्।

**वैरूप्यं कतमत्**। यत्कस्यचिदेव वैसादृश्येन कस्यचिदेव वैसादृश्यम्। तदप्येत-द्विपर्ययात्पञ्चविधमेव द्रष्टव्यम्॥

**प्रत्यक्षं** कतमत्। यदविपरोक्षमनभ्यू [हितमनभ्यूह्य]मविभ्रान्तञ्च। अविपरोक्षं कतमत्। तच्चतुर्भिराकारैर्वेदितव्यम्। अपरिभिन्नेन्द्रिये प्र [2A-8[1] त्युपस्थिते मनस्कारे अनुरूपोत्तरितः [अनुरूपोत्पत्तितः] समतिक्रमोत्पत्तितः अनावरणतः अवि-प्रकर्षतश्च [।]

**अनुरूपोत्पत्तिः** कतमा। कामावचरस्येन्द्रियस्य कामावचरो विषयः ऊर्ध्वभूमि-कस्येन्द्रियस्य ऊर्ध्वभूमिको विषयः य उत्पन्नः समुत्पन्नो ज[ा]त[ो] निर्वृत्तः स अनु-रूपोत्पत्तिरित्युच्यते। **समति[स]क्रमोत्पत्तिः** कतमा [।] यदूर्ध्वभूमिक[2]स्येन्द्रिय-स्याधोभूमिको विषय उत्पन्न इत्येवमादि समतिक्रमोत्पत्तिरित्युच्यते।

**अनावरणं** कतमत् [।] तदपि चतुर्भिराकारैर्वेदितव्यम्। अवच्छादनीयेनावरणेन यदनावृतं तदनावृतमित्युच्यते। **अवच्छादनीयमावरणं** कतमत्। तद्यथा तमोऽन्धकार-

1. A seperate hand adds this in a foot-note.

मविद्यान्धकारं रूपान्तरं चानच्छं [।] अन्तधापनीयमावरणं कतमत्। [3] तद्यथा औषधिबलम्वा [बलंवा] मन्त्रबलम्वा [बलंवा] मत्यनुभावबलम्वा [बलंवा] [।] अभिभवनीयमावरणं कतमत्। तद्यथा परीत्तं प्रभूतेनाभिभूतं नोपलभ्यते भोजनपाने वा, विषं, केशाग्रं वा, यद्वा पुनरेन्यदेवं भागीयं। तद्यथा परीत्ततेज [।] : उग्रतेजसा अभिभूतेनोपलभ्यते । आदित्येन वा तारकरूपाणि । तद्यथा पक्षेण [4] प्रतिपक्षो[ऽ भिभूतो नोपलभ्यते । अशुभा [अशुभ] मनस्कारेण वा[ऽ]शुभता अनित्यदुःखानात्ममनस्कारेण वा सुखता अनिमित्तमनस्कारेण वा सर्व्वानिमित्तानि [।] **संमोहावरणं** कतमत् । तद्यथा मायाकर्मरूपनिमित्तविशेषो वा अनुसादृश्यम्वा [अनुसादृश्यं वा], अध्यात्मम्वा प्रत्यात्मं तैमिरिकं च स्वप्न-मूर्च्छा-मनः प्रमाद उन्मादश्चैभिः यद्वा पु[5]नरन्य[द]व्येवंभागीयमावरणमिदमुच्यते संमोहावरणम् [।]

**अविप्रकर्षः** कतमः [।] द्विविधेन विप्रकर्षेण यदविप्रकृष्टं **देशविप्रकर्षतः कालविप्रकर्षतः अपचयविप्रकर्षतश्च** । तदेतत्सर्वमभिसमस्य अविपरोक्षतः प्रत्यक्षप्रमाणं द्रष्टव्यम् । अनभ्यूहितमनभ्यूह्यं प्रत्य[क्षं]कतमत् । यो ग्रह [6]णमात्रप्रसिद्धोपलब्ध्याश्रयो विषयः ? यश्च विषयप्रतिष्ठितोपलब्ध्याश्रयो विषयः । ग्रहणमात्रप्रसिद्धोपलब्ध्याश्रयः विषयः कतमः [।] यो विषयः ग्रहणमात्रप्रसिद्धाया उपलब्धेराश्रयालभ्यं करोति । वि[भि]षगातुराय भैषज्यं दद्याद् वर्ण्णगन्धरणे [गन्धरसं] स्पर्शसम्पन्नं यद्वा वीर्यविपाकप्रभावं च । तस्य व[7]र्ण्ण गत्वर गन्धर स[सं]स्पर्शा ग्रहणमात्रप्रसिद्धाया उपलब्धेराश्रयभूता द्रष्टव्या [:] । यदावीर्यविपाकप्रभावस्तु अकृते आकस्ये [ल्प्ये ?] अभ्यूह्यो भवति । कृतेऽनभ्यूहित इत्ययमेवंभागीयो ग्रहणमात्रप्रसिद्धोपलब्ध्याश्रयो विषयो वेदितव्यः । विषयप्रतिष्ठितोपलब्ध्याश्रयो विषयः [कतमः [।] यो] विषयप्रतिष्ठिताया उपलब्धेराश्रय-[8] कृत्यं करोति(!) । वावतिष्ठते तद्यथा योगाचारस्य पृथिव्या [मा] पस्तेजे [।] वायुधातूनभ्यह्य पृथिवी मापःअधिमुच्यमानस्य पृथिवी संज्ञा व्यावर्त्तते अप्संज्ञ [।] ।

[2B-8] [1] पृथिवी तेजोवायुमधिमुच्यमानस्य पृथिवी संज्ञा वावतिष्ठते [व्यावर्त्तते] तेजो वायुसंज्ञ[।] तस्य या पृथिवी संज्ञा सा विषयप्रतिष्ठिता उपलब्धिः । या पृथिवी सा विषयप्रतिष्ठिताया उपलब्धेराश्रयः, यथा पृथिवी एवमापस्तेजो वायुर्यथायोगं द्रष्टव्यः । अयमुच्यते प्रतिष्ठाया उपलब्धेराश्रयो विषयः । सो [ऽनभ्यूहितो] नभ्यूह्य ज[ा]तवस्तु [2] अनिष्पन्नायामधिमुक्तावभ्यूह्य विद्यन्त [विद्यत] इति । निष्पन्नायां त्वभ्यूहित[ं] इदमुच्यते अनभ्यूहितमभ्यूह्यम् (।) प्रत्यक्षं प्रमाणम् ॥

**विभ्रान्तो विषयः प्रत्यक्षं** कतमत् । तत्पञ्चविधं द्रष्टव्यं सप्तविधम्वा [विधं वा] [।] पञ्चविधं कतमत् । [पंचविधा भ्रान्तिः] । पञ्चविधा भ्रान्तिः कतमा [।] संज्ञाभ्रान्तिः [।] संख्याभ्रान्तिः [।] संस्थानभ्रान्तिः । वर्ण्णभ्रान्तिः कर्म्मभ्रान्तिश्च ।

सप्तवि [3] धाभ्रान्तिः कतमा [।] अस्यामेव पञ्चविधायां भ्रान्तौ सन्ततिं द्विविधां भ्रान्ति (तिं) मिश्रयित्वा सप्तविधा भ्रान्तिर्भवति [।] द्विविधा भ्रान्तिः कतमा [।] चित्तभ्रान्तिर्दृष्टिभ्रान्तिश्च ।

**संज्ञ[ा]भ्रान्तिः** कतमा । या अतल्लक्षणा तत्संज्ञ[ा]तद्यथा मरीचिकानिमित्तायां मृगतृष्णिकाया[म]प्संज्ञ [ा] [।]

**संख्याभ्रान्तिः** कतमा । यः अल्पे बह्वभिमानः। तद्यथा तैमिरिकस्य [4] एकस्मिश्चन्द्रे बहुचन्द्रदर्शनम् [।]

**संस्थानभ्रान्तिः** कतम[ा] [।] य [:] अन्यसंस्थाने तदन्यसंस्थानाभिमानः [।] तद्यथा अलातचक्रसंस्थानदर्शनम् ।

**वर्ण्णभ्रान्तिः** कतमा । यः अन्यवर्ण्णे तदन्यवर्ण्णाभिमानः [।] तद्यथा काम [ब] लेन व्याधिनोपहतेन्द्रियस्य सपीते रूपे पीतरूपदर्शनम् ।

**कमभ्रान्तिः** कतमा । यः अकर्म्मके सकर्मकत्वा[ऽ]भिमानः । तद्यथा गात्रमुष्टि-मूर्ध्वं धावतः छन्दानुव्रजदर्शनम् ।

**चित्तभ्रान्तिः** कतमा [।] या पञ्चविधयैव भ्रान्त्या विभ्रान्तेश्च रोधनां, दीपना, व्यवस्थापनामंगलसंज्ञ[ा] अभिनिवेशः [।] तदेतत् प्रत्यक्षं कस्य प्रत्यक्षम्व [प्रत्यक्षं व] क्तव्यम् । समासतश्चतुर्ण्णां रूपीन्द्रिय [6] प्रत्यक्षं, मनोऽनुभवप्रत्यक्षं, लोकप्रत्यक्षं, शुद्धप्रत्यक्षं च ।

**रूपीन्द्रियप्रत्यक्षं** कतमत् । रूपिणां पञ्चानामिन्द्रियाणां योगो [गा] च [ा] रवि-षयो यथानिर्दिष्टेन प्रत्यक्षलक्षणेन [।]

**मनोऽनुभवप्रत्यक्षं** कतमत्। यो मनोगोचरो विषयो यथानिर्दिष्टेनैव प्रत्यक्षलक्षणेन ।

**लोकप्रत्यक्षं** कतमत् । तदुभयमेकत्यमभिसंक्षिप्य लोकप्रत्य [7] क्षमित्युच्यते ।

**शुद्धप्रत्यक्षं** कतमत् । यत्तावल्लोकप्रत्यक्षं शुद्धप्रत्यक्षमपि तत् । स्याच्छुद्धप्रत्यक्षं न लोकप्रत्यक्षं यो लोकोत्तरस्य ज्ञ [ा] नस्य गोचरविषयः । सच्च सतः असच्चासतः, सोत्तरञ्च सोत्तरतः । असाधारणं लौकिकैः [।] इदमुच्यते प्रत्यक्षं प्रमाणम् ॥

**अनुमानं** कतमत् । यत्केनचिदेव चिह्ननिमित्तसम्बद्धेन वर्त्तमानेन वा पूर्वदृष्टेन वा 2A-9 [1] विषयाभ्यूहनम् । तद्यथा चक्रेण रथमनुमिनोति । धूमेनाग्निं राज्ञ [ा] [राज्यं] पत्या स्त्रियं ककुद्विषाणाभ्यां गावम् । शिशुं कालशीव [केशैः ?] प्रत्यग्रयौवन

[व] या तरुणम् । वलीपलितादिभिर्वृद्धम् । स्वेन वेषग्रहणेन गृहिणाम्वा [णां वा] प्रव्रजितानाम्वा [नां वा] अर्याणां सद्धर्मश्रवणतया····मात्मेयतया च श्राद्धम् । सुचिन्तितचिन्तितया सुभाषितभा [2] षितया सुकृतकर्मकारितया । पण्डितं [।] अनुकम्पया प्रियवादितया स्वैर्येण मुक्तहस्ततया गंभीरार्थसन्धिनिर्मोचनतया च । बोधिसत्त्वं [।] औद्धत्यद्रवसंवर्धित [?] संक्रीडितसंकिलकिलायितेन अवीतरागं, यदा प्रशान्तेर्यापथेन वीतरागं तथागतैर्लक्षणैरनुव्यजनैस्तथागतज्ञानेनोपशमेन प्रतिपत्त्या प्रभावेन [ण] तथा [3] गतमर्हत्त्वं सम्यक्त्वं बु(द्धं) सर्वज्ञं, कौमारदृष्टेन निमित्तेन स एवायमिति वृद्धमनुमिनोति । इत्येवंभागीयं **लिंगतोऽनुमानं** वेदितव्यम् ।

**स्वभावतोऽनुमानं** कतमत् । यत्प्रत्यक्षेण स्वभावेन विपरोक्षे स्वभावे अभ्यूहनं एकदेशेन वा स्वभावस्य एकदेशेनाभ्यूहनं [।] तद्यथा वर्त्तमानेनातीतमनुमिनोति । अतीतेनानागतं [4] प्रत्युत्पन्नेन सन्निकृष्टेन विप्रकृष्टं प्रत्युत्पन्नेनानागतमनुमिनोति । अन्नपानयानवस्त्रालङ्काराणां एकदेशेन स्तोकेन कतिपयेन परीत्तेन परीक्षितेन गुणदोषेण परीक्षया कृत्यमन्नपानयानवस्त्रालङ्काराणि म [अ] नुमिनोति । एकदेशपाकेन वा परिनिष्ठपाकमित्येवभागीयं स्वभावतोऽनुमानं वेदितव्यं ।

**कर्म्मतो** [ 5 ] [ ऽ ] **नुमानं** कतमत् । यत्कारित्रेण कर्माश्रयाभ्यूहनम् । स्पन्दनपक्षिनिडीयनादिभिः स्था ए [ व ] नुयिनोति । प्रस्पन्दनाङ्गविक्षेपादिभिः पुरुषं, पदविहारेण हस्तिनं गात्र [ ां ] गविहारेण गर्दभम् । ह्रेषितेनाश्वं, नदितेन सिंहं, नदितेनर्षभम् । दर्शनेन चक्षुः श्रवणेन श्रोत्रं । जिघ्रितेन घ्राणं । स्वादितेन जिह्वां । स्पर्शिते [ 6 ] न कायं, विज्ञ [ ा ] नेन मनः,[1] प्रतिघातेन पृथिवीम् । स्निग्धहरितप्रदेशदर्शनेन आप [ ो ], दाहभस्मदर्शनेनाग्निं, वनस्पतिप्रस्पन्दनेन वायुम् । सदा निमीलितक्षित्वेन दण्डं [ अन्धं ], परव्यपदेशखलितापमार्गं [ ने ] ? गमनाने[ न ] अन्धम् । उच्चैः श्रवणेन बधिरम् ।

श्र [ा] द्धाः पण्डिता वीतरागवीतरागबोधिसत्त्वे तथागते ( ?? ) कर्म्म[1] ( 7 ) तोनुमानं पूर्व्ववद्द्रष्टव्यं यथ [ ा ] [ ? ] ।[1]······ ।

धर्म्मतोऽनुमानं कतमत् । यदनुशिष्टेन [ न । ] धर्मसम्बन्धेन तत्सम्बद्धाया अभ्यूहनम् । तद्यथाऽनित्यसम्बन्धेन दुःखतामनुमिनोति । शून्यतात्मतां, ज[ ा ] तिसम्बन्धेन दुःखसम्बन्धेन जराधर्म्मतां, जरासम्बन्धेन मरणधर्म्मतां, रूपिसंनिदर्शनप्रतिघसम्बन्धेन प्रदेशतां, मूर्त्ततां [ ता ] मनुमिनोति । [ 8 ] सास्रवसम्बन्धेन सदुःखतां अनास्रवसम्बन्धेन अदुःखतां । संस्कृतसम्बन्धेन उत्पादव्ययस्थित्यन्यथात्वधर्म्मताम् । इत्येवं भागीयं धर्म्मतो[ऽ]नुमानं वेदितव्यम् ।

---

1. Photo indistinct, letters illegible.

हेतुफलतोऽनुमानं कतमत् । यद्धेतुना फलस्य, फलेन वा हेतोरभ्यूहनम् । तद्यथा गत्या देशान्तरप्राप्तिमनुमिनोति, देशान्तरप्राप्त्या गतिम् । [ 1 ] राजा [ ा ] राधने [ न ] महाभिसारलाभम् । महाभिसारलाभेन राजा [ा] राधनम् । सुकृतसम्पन्नकर्म्मान्ततया महाधनधान्यलाभम् । महाधनधान्यलाभेन सुकृतकर्मान्तितां, प्राक्तनेन सुचरितदुश्चरितेन सम्पत्तिविपत्ती, सम्पत्तिविपत्तिभ्यां प्राक्तनसुचरितदुश्चरितं [ ते ] । प्रभूतभोजनेन तृप्तिं, तृप्त्या प्रभूतभोजनम् । विषमभोजनेन व्याधिं व्याधिनां विष [ 2 ] मभोजनं । ध्यानेन वैराग्यं, वैराग्येन [ ण ] ध्यानं । मार्गेण श्रामण्यफलम् । श्रामण्यं फलेन मार्गं । इत्येवंभागीयं हेतुफलतो[ऽ]नुमानं वेदितव्यम् । इदमुच्यते अनुमानम् ।

**आप्तागमः** कतमः । यत्सर्वज्ञभाषितम् । ततो वा श्रुत्वा तदनु धर्मं वा [ । ] स पुनस्त्रिविधो द्रष्टव्यम् [ द्रष्टव्यः ] । प्रवचनाविरोधतः । संक्लेशप्रतिपक्षतः । लक्षणाविरो [ 3 ] धतश्च ।

**प्रवचन[ा]विरोधः** कतमः । यः श्रावकभाषितो वा बुद्धभाषितो वा सूत्रान्तः परम्परागतः । तत्र यो धर्माविरोधः । अर्थावबोधः [ अर्थाविरोधः ] ।

**संक्लेशप्रतिपक्षः** कतमः । यो धर्मो भाव्यमानः रागविनयाय सम्व [ संव ] र्त्तते । द्वेषविनयाय मोहविनयाय । सर्वक्लेशोपक्लेशविनयाय सम्व [ संव ] र्त्तते ॥

**लक्षणाविरोधः** कतमः । लक्षणविरोधविप[ 4 ]र्ययेण लक्षणाविरोधो द्रष्टव्यः । लक्षणविरोधः कतमः [ । ] यथापि तदसति लक्षणे सल्लक्षणं समारोपयति । तद्यथा आत्मा वा, सत्त्वो वा, जीवो वा, जन्तुर्व्वा इत्येवमादि । शाश्वतो वा उच्छिद्यते । रूपी वा अरूपी वेत्येवमादि च । सति लक्षणे ए [ ऐ ] कान्तिको अनैकान्तिकतां व्यवस्थापयति । तद्यथा अनित्याः सर्वसंस्काराः, दुःखा [ : ] [ 5 ] सर्वसास्रवाः, सर्वधर्म्मा अनात्मानः [ । ] अयञ्च एकत्वं [ एकत्यं ] नित्यं व्यवस्थापयति । एकत्यमनित्यं, [ एकत्यं ] दुःखं व्यवस्थापयति एकत्यम ( त्यं ) मुदश्च । एकत्यमात्मेति व्यवस्थापयति ], एकत्यमनात्मा [ । ] तथा यान्यव्याकृतवस्तूनि भगवता व्यवस्थापितानि । एकान्तेन तेषां व्याकरणं । पर्येषते । व्याकरणतश्च व्यवस्थानं प्रत्येति । अने[ नै ]कान्तिकमप्ये[ प्यै ]कान्तिकेन । व्यवस्थापयति । तद्यथा, सर्वस्यां सु [6] खायां वेदनायां रागो न शेत इति । सर्व्वस्यां दुःखायां द्वेषः । सर्व्वा सुखा वेदना सास्रवा एकान्तेन सुखेति । सांचेतनीयस्य कर्म्मणः । एकांशेन दुःखमेव विपाकं प्रतिसंवेदयतीत्येवमादि । सति लक्षणे यदविशिष्टलक्षणं तदविशेषतो व्यवस्थापयति । यद्वा विशिष्टलक्षणं तदविशेषतो व्यवस्थापयति । तद्यथा यत्संस्कृते [ 7 ] विशिष्टलक्षणं तदसंस्कृते[ऽ]पि व्यवस्थापयति । [ एवं भावे विशिष्टलक्षणं त···· [ अभावे च ] तदपि

व्यवस्थापयति ][1]। यथा संस्कृतासंस्कृते एवं रूपिष्वरूपिषु, सनिदर्शनेष्वनिदर्शनेषु, शप्रतिघेष्वप्रतिघेषु, सास्रवेष्वनास्रवेषु इत्येवमादि यथायोगं वेदितव्यम्। सत्येवं लक्षणे अहेतुपतितं, हेतुफलतः लक्षणं व्यवस्थापयति। तद्यथा सुचरितस्यानिष्टफलं [ -निष्टं फलं ] दुश्चरितस्येष्टं [ । ] दुराख्याते धर्मवि [ 8 ] नये मिथ्याप्रतिपत्तितो विशुद्धि, स्वाख्याते धर्मविनये सम्यक्प्रतिपत्तितः। संक्लेशं व्यवस्थापयति। अपरिनिष्पन्ने लक्षणे प्रज्ञप्तिवादेन परिनिष्पन्नं लक्षणम्। प्रज्ञप्तिवादेन व्यवस्थापयति। तद्यथा निरभिलप्येषु सर्वधर्मेषु। अभिलापतः परमार्थव्यवस्थानम्। इत्येवंभागीयो लक्षणाविरोधो वेदितव्यः। तद्विपर्ययेणाविरोधः। 2A-10[1] अयमुच्यते लक्षणाविरोधोयमुच्यते आप्तागमः [।]

यदा स्वलक्षणतः सिद्धाः सर्वधर्मा व्यवस्थापिताः स्वस्माद्धर्मतायां केन कारणेन साध्यस्यार्थस्य प्रसिद्धये प्रतिज्ञ [ ा ] क्षिप्ता [ ? ] यावदेवाभिरुचि [ : ] तस्यार्थस्य परि [ 2 ] दीपनार्थं [ । ] केन कारणेन हेतुरुपसंह्रियते। यावदेव दृष्ट[ ा ]वस्या श्रिया [ दृष्टावस्थाश्रयो ? ] युक्त्या तस्मिन्नेव प्रतिज्ञ [ ा ] ते[ऽ]र्थे परिग्रहणार्थम्। केन कारेण दृष्टान्त उपसंह्रियते। यावदेव तस्या एव युक्तेर्दृष्ट[ा]वस्थाश्रयसन्दर्शनार्थम्। केन कारणेन सारूप्यं वैरूप्यं प्रत्यक्षमनुमान-माप्तागमश्चोपसंह्रियते [ न्ते ] यावदेव तयोरेव हेतूदाहरणयोर्विरो [ 3 ] धावि रोधपरिदीपनार्थं। स पुनर्विरोधो द्वाभ्यामाकाराभ्याम्वे [ भ्यां वे ] दितव्यमैने-कान्तिकत्वेन च साध्यसमत्वेन च। अविरोधः। द्वाभ्यामेव कारणाभ्यां वेदितव्यः। ऐकान्तिकत्वेन साध्यविशेषेण च यत्र च विरोधः। न तत्प्रतिज्ञ [ ा ] सिद्धो न प्रमाणी-क्रियत इति। कृत्वा न प्रमाणं यत्र त्वविरोधः तत्प्रतिज्ञ [ ा ] सिद्धो [ द्धौ ] प्राणी-क्रियत इति कृत्वा प्रमा [ 4 ] णमित्युच्यते। इदमुच्यते **वादाधिष्ठानं**॥ 0॥

**वादालङ्कारः कतमः** [।] सपञ्चविधो द्रष्टव्यः। तद्यथा **स्वपरसमयज्ञता**। **वाक्करणसम्पन्नता**। **वैशारद्यं** स्थैर्यं, दाक्षिण्यं च।

**स्वपरसमयज्ञता** कतमा। यथापीहैकत्यस्य। यो धर्मविनयः। अभिरुचितो भवत्यस्याभिप्रेतः। तत्र शास्त्रसमये सिद्धान्ते पाठतो, वृति [ °त्त ],श्रवण [5] तः, चिन्तनतः, परिपाकतः, प्रतिपत्तितश्च। कृतकुशलो भवति। कृतभाष्यः, कृतविद्यः [ । ] यो वा पुनर्धर्मविनयः नाभिप्रेतो भवति। नाभिरुचितः। तत्र परशास्त्रे, परसमये, परसिद्धान्ते पाठतो, वृति [ त्ति [ तः, श्रवणतश्चिन्तनतः, परिपाकतो, नो तु प्रति-

1. A seperate hand adds this in a footnote; photo indistinct, letters illegible.

पत्तितः कृतकुशलो भवति। कृतभाष्यः कृतविद्यः। इयमुच्यते। स्व [ 6 ] परसमय-ज्ञयता [ परसमयज्ञता ]।

**वाक्कारणसम्पन्नता** कतमा। यथापीहैकत्यः शब्देन वक्ता भवति। नापशब्दैः। शब्दः कतमः [ । ] पञ्चभिर्गुणैर्युक्तो वेदितव्यः। अग्राम्यो भवति। लघुर्भवति। तेजस्वी भवति। सिद्धो भवति। स्वर्थश्च भवति। कथमग्राम्यो भवति। कुदेशराष्ट्र-कुजनपदभाषावर्जनतया। कथं लघुर्भवति। लोकप्रतीत-युक्त [7] रभाषाप्रयुक्ततया। कथमोजस्वी भवति। यस्यार्थे कथा विप्रकृता भवति। तस्यार्थस्य सिद्धये सुप्रयुक्त-बलवत्तया [ । ] कथं सम्बन्धो [ सिद्धो ] भवति। पौर्व्वापर्येण धर्मार्थविशिष्टतया [ । ] कथं स्वर्थो भवति। अस्त्युदयं निःश्रेयसं चारभ्याविपर्यस्ततया [ । ] तच्चैवं शब्दवादिनः नवभिराकारैः सम्पन्नम्वा [ क् ] करणं वेदितव्यम्। अनाकुलं [ 8 ] असंरब्धम्। गमकं पितं [ ? ]। अर्थयुक्तं कालेन स्थिरं दीप्तं प्रबन्धं द्धं ] च। तदेतत्सर्वमभिसमस्य वाक्करणसम्पदित्युच्यते। इयमुच्यते वाक्करणसम्पत्।

**वैशारद्यं** कतमत्। यथापीहैकत्यो बहुनैकायिकायामपि पर्षदि विचित्रनैकायिका-यामपि उदार [ 2B-10 ] [ 1 ] नैकायिकायामपि अनवष्ट [ द्य ] नैकायिकाया-मपि सभ्यनैकायिका[ या ]मपि [।] [ अत्रान्तरे अपाण्डुमुखः ]। अलीनचित्तः। अदीन-चित्तः असंस्विन्नगात्र[ा]भग्नपराजितः परापृष्ठीकृतो निगृहीतः तस्मात्**कथात्यागो** निग्रह-स्थानमित्युच्यते। **कथासादः** कतमः [ । ] यथापि तद्वादी परवादिनाभिभूतः। अन्येनान्यं प्रतिसरति। बहिर्धा वा [ 2 ] कथामुपनयति। कोपञ्च द्वेषञ्च मानं च म्रक्षं चाघातं° चाक्षान्ति° चाप्रत्ययञ्च प्राविष्करोति। तूष्णींभूतो वा भवति मद्गुभूतः [ । ] स्रस्तस्कन्धः। अधोमुखः प्रध्वान [ प्रध्वस्त ] परमः।

**निष्प्रतिभानः** [ । ] **कथमन्येनान्यं प्रतिसरति**। पूर्विकां प्रतिज्ञ[ ा ]मुत्सृत्य [ 7 ] न्यां प्रतिज्ञ [ ा ] मालम्बते। पूर्व्वकं हेतुमुदाहरणं। सारूप्य नै [ वै ] रूप्यं प्रत्यक्षमनुमानमाप्तागममुत्सृज्यान्यमाग[ 3 ]ममालम्बते। कथम्ब [ कथं ब ]हिर्धा कथामुपनयति। विप्रकृतां कथामुत्सृज्य या अन्नकथा, पानकथा, राजकथा चौ [ चौ ] रकथा, वीथीकथा, वेश्याकथा-इत्येवंभागीयाः कथा विप्रकृता याः [ या ] कथा बहिर्धा कथेत्युच्यते। तामुपनयति।

अतिक्रमोत्तरवाचं **कथं कोपं प्राविष्करोति**। पारुष्यासभ्यवादेन प्रतिवादिनम-वसाद[ 4 ]यति।

**कथं द्वेषं प्राविष्करोति**। प्रतिकर्त्तव्यतावादेन प्रतिवादिनमभियोजयति।

**कथं मानमाविष्करोति ।** हीनज[ ा ]तिगोत्रकुलादिवादेन प्रतिवादिनं पन्स-यति [ ? ] ।

**कथं म्रक्षमाविष्करोति ।** प्रतिच्छादितदुश्चरित उद्भावनावादेन प्रतिवादिनं चोदयति ।

**कथमाघातं प्राविष्करोति ।** वधकः प्रत्यर्थिक [ ] प्रत्यमित्रवा[ 5 ]देन प्रतिवादिनमाक्षिपति ।

**कथमभ्यन्ति [ कथमक्षान्ति ] प्राविष्करोति ।** वैरनिपातनवादेन प्रतिवादिनं तर्ज्जयति ।

**कथमप्रत्ययं प्राविष्करोति ।** भिन्नचारित्रवादेन प्रतिवादिनं प्रतिक्षिपति ।

**कथं तूष्णींभूतो भवति ।** वाक्कर्मसंकोचतः ।

**कथं मद्गुभूतो भवति** [ । ] स न ष्ट [ वचन ] स्य संकोचतः ।

**कथं स्रस्तस्कन्धो भवत्यधोमुखः** [ । ] कायकर्म्मधैर्यसंकोचतः ।

कथं प्रध्वान ( ध्वस्त ) परमो भवति निष्प्रतिभानः ।

प्रतिभानसंकोच ] [ तः । ] इत्येवं भागीयैस्त्रयोदशभिराकरैः **कथासादो** वेदितव्यः ।

द्वाभ्यां पूर्व्वकाभ्यां विक्षेपप्रतिपत्ति [ 6 ]तः, सप्तभिर्मध्यैर्मिथ्याप्रतिपत्तितः, चतुर्भिः पश्चिमैः अप्रतिपत्तितः । अयमुच्यते कथासादः निग्रहस्थानम् ।

**कथादोषः** कतमः । नवभिर्दोषैर्दृष्टा कथा कथादोष इत्युच्यते । **नवदोषाः कतमे** [ । ] **तद्यथा** आकुलम्ब [ आकुलं व ] चन, संरब्धम् । अ[ त्य ]गमकम् । अमितं [ । ] अनर्थयुक्तम् । अकालेन अस्थिरम् अदीप्तं अप्रबुद्धं [ 7 ] च वचनम् ।

**आकुलम्व [आकुलंव] चनं** कतमत् । यदधिकारमुत्सृज्य विचित्रकथाप्रतानम् । **संरब्धवचनं** कतमत् । यत्कोपोद्धतं द्रवोद्धतं च । **व्यगमकं** वचनं कतमत् । यदधिकं पुनरुक्तार्थं न्यूनार्थं च । **अनर्थयुक्तं** वचनं कतमत् । तद्दशाकारं द्रष्टव्यम् । निरर्थकम् । [ 8 ] अपायकम् । युक्तिभिश्च साध्यसमम् । अतिच्छलोपसंहितञ्च । अर्थानुपलब्धितः असत्यत्वार्थः अनै [ नै ] कान्तिकतः, साधनस्यापि साध्यतः, अयोनिशो मध्यसर्व-वादानुगतश्च । अकालवचनं कतमत् । यत्पूर्वम्व [ यत्पूर्वं व ]क्तव्यं पश्चा [ दभि-हितं । पश्चाद्वक्तव्यं पू ] र्व्वमभिहितम् । अस्थिरवचनं कतमत् [अत्रान्तरे पाण्डुमुखः], अपाण्डुमुखः, अगद्गदस्वरः, अदीनवाक्यः ।

2A-B, [ 1 ] वाचमुदाहरति । इदमुच्यते **वैशारद्यम्** [ । ]

**स्थैर्यं** कतमत् । यथापीहैकत्य [ : ] काल[ माग ]म्य अत्वरमाणो वाचं भाषते । न त्वरमाण इदमुच्यते स्थैर्यम् ॥

**दाक्षिण्यं** कतमत् । यथापीहैकत्यः सू[सु]रतो भवति । पेरषामविहेठनज [ ा ] तीयः । [ सु ] समाशूरता [ 2 ] नां सू [ सम सुरतानां ? ] रतभूमिः । तामनभिवृत्त्य परचित्तानुवर्त्ती वाचं भाषते । तच्च कालेन भूतेन अनर्थोपसंहितेन [ शै ] क्षेन इदमुच्यते दाक्षिण्यम् ॥

अस्य खलु पञ्चविधस्य वादालंकारस्य एवं विप्रकृतस्य सप्तविंशतिरनुशन्सा [ शंसा ] वेदितव्या [ : ] । कतमे सप्तविंशतिः । संस [ म ? ] न्त [ स्त ? ] तरो भवति । पर्षत्स्व [ पषत्सु स्व ] परसम [ 3 ] यदोषज्ञे [ ा ] भवति । स्वसमयविशेषज्ञे [ ा ] भवति । अनाभिनिविद्यो [ विद्यो ] भवत्ययुक्तरागी शास्त्रपरिग्रहे अनेयो भवति । स्वकाद् धर्मविनयात्परेणोक्त आशुतरं प्रतिपद्यते । परेणोक्तमाशुतरमुद्गृह्णाति । परेणोक्ते आश्रु [ शु ] तरमुत्तरं प्रतिपद्यते । वाग्गुणेन पर्षदं रंजयति । तद्विध्या[द्या]धिमुक्त जं [ श्च ] [ अत्रान्तरे इत्यादि उपरिप—][1]

सुनिरुक्तमर्थादव्यंजनं करोति । [ 4 ] अव्यर्थितो भवति । कायेन अव्यर्थितो भवति । पर वा सज्जते । वदतः न प्रतिभानं पर्यादीयते । न काय [ : ] क्रा[क्ला]म्यति न स्मृतिर्मुष्यति । न चित्तमुपहन्यते । न कण्ठं [ : ] क्षिणोति । विस्पष्टं विज्ञेयं भवत्यस्य भाषितम् । आत्मानुरक्षी स्वयं न कुप्यति । परचित्तानुवर्त्ती परं न कोपयति । प्रतिवादिनश्चित्तमभिप्रसादयति । अवैर [ 5 ] सम्पन्नवर्त्तिनीं प्रतिपदं प्रतिपन्नो भवति । दिग्विदिक्षूदारो वर्ण्णकीर्त्तिशब्दश्लोको[ऽ]भ्युद्गच्छति । महाचार्यो महाचार्य इति संख्यां गच्छति । विशिष्टशब्दो भवति लोके [ । ] तद्यथा कामोपभोगी मणिशुक्तिवैडूर्याव्यापूतैर्हर्षकटककेयूरादिभिराभरणैरत्यर्थं भासते । तमभिविनोदयते । एवमेव वादी एभिः [ 6 ] सप्तविंशति [ भि ] रनुशंसैः प्रत्यात्मिकेन पञ्चविधेन वादालंकारेण भाषति [ ते ] तपति विनोदयते । तस्माद् वादालङ्कार इत्युच्यते । अयमुच्यते **वादालङ्कारः** ॥ 0 ॥

**वादविहग्रः** कतमः । स त्रिविधो द्रष्टव्यः **कथात्यागः, कथासादः, कथादोषश्च** [ । ]

**कथात्यागः** कतमः [ । ] इह वादी त्रयोदशाकारया वाग्वि[ 6 ]ज्ञप्त्या प्रतिवादिनं विज्ञापयन् कथां परित्यजति । त्रयोदशाकारा वाग्विज्ञप्तिः कतमा । तद्यथा

1. Litters indistinct, added by a sperate hand.

अल्पा ध्रुवसमा ध्रुवा द्रवा सुपरीक्षितं सम [ सुपरीक्षितसमं ] सुपरीक्षितम्वा [ तंवा ] तव अयुक्तमपयुक्तम्वा [ क्तं, वा ] असंहितं समसहितम्वा [ असमवहितं वा ], तत्र निगृहीतो वा यद् वाद ( यो ) बादः प्रतिष्ठितो बा युष्मद्वाद एतावन्मे अत्र प्रति[त्रति-दाति उत्तरि वा पुनः संचिन्त्य पक्ष्य [ । ] [ 7 ] मि ।

अलमस्त्येतावच्च पुनः कथं करिष्यामीति । अनया त्रयोदशाकारया वाग्विज्ञप्त्या प्रतिवादिनं विज्ञ [ ा ] पयन् । विप्रकृतांकथम्परित्यजति [ कथां परित्यजति ]। तस्याश्च परित्यागाज्जितो भवति अवज्ञात्म [·········] प्रतिज्ञ [ ा ] तं ॥[1]

1. MS. Leaf hereafter is indistinct and illegible.

चतुर्थं परिशिष्टम्

APPENDIX IV

## परमार्थगाथाव्यवस्थान-आभिप्रायिकार्थगाथाव्यवस्थान-शरीरार्थगाथा-व्यवस्थानानि ( चिन्तामयीभूमिगतपाठानुसारतः )

## SANSKRIT TEXT OF PARAMĀRTHAGĀTHĀVYAVASTHĀNA. ĀBHIPRĀYIKĪGĀTHĀVYAVASTHANA AND ŚĀRĪRĀRTHAGĀTHĀVYAVASTHĀNA.

**धर्मप्रविचयः** कतमः। स द्विविधो द्रष्टव्यः। सूत्रार्थप्रविचयतः। गाथार्थप्रविचयतः। तत्र सूत्रार्थप्रवितयम्वस्तुसङ्ग्राहण्यां बोधिसत्त्वपिटकोपपा[ वा ]द च विस्तरेण वक्ष्यामि। गार्थार्थप्रविचयः पुनस्त्रिविधो द्रष्टव्यः। **परमार्थगाथाव्यवस्थानतः। आभिप्रायिकार्थगाथाव्यवस्थानतः। शरीरार्थगाथाव्यवस्थानतश्च ॥**

स्वामी न विद्यते कश्चिन्न कर्त्ता नापि वेदकः।
धर्माः सर्वेऽपि निश्चेष्टाः अथ चेद् वर्तते क्रिया ॥ 1 ॥
द्वादशैव भवाङ्गानि स्कन्धायतनधातवः।
विविच्य सर्वाण्येतानि पुद्गलो नोपलभ्यते ॥ 2 ॥

शून्यमाध्यात्मिकं सर्वं शून्यं सर्वं बहिर्गतम्।
न विद्यते सोऽपि कश्चिद्यो भावयति शून्यताम् ॥ 3 ॥

आत्मैव ह्यात्मनो नास्ति विपरीते न कल्पयेत्।
नैवेह सत्त्व आत्मा वा धर्मास्त्वेते सहेतुकाः ॥ 4 ॥

क्षणिकाः सर्वसंस्काराः अस्थितानां कुतः क्रिया।
भूतिर्येषां क्रिया सैव कारकं सैव चोच्यते ॥ 5 ॥

चक्षुः पश्यति नो रूपं श्रोत्रं शब्दां [ दान् ] शृणोति न [ नो ]।
घ्राणं जिघ्रति नो ग्रन्धां [ धान् ] जिह्वा नास्वादयेद्ररसां [ सान् ] ॥6॥

कायः स्पृशति न स्प [ ऽ ] र्शान्मनो धर्मान्न कल्पयेत्।
नास्ति चैषामधिष्ठाता प्रेरको विद्यते न च ॥ 7 ॥

न परो जनयत्येनं स्वयं नैव च ज [ ा ] यते।
प्रतीत्य भावा जायन्ते निष्पुराणा नवा नवा [ ः ] [ ॥ ] 8 ॥

न परो नाशयत्येनं स्वयं नापि च नश्यति ।
प्रत्यये सति ज [ ा ] यन्ते ज [ ा ] तकाः स्वरसभंगुरा [ ॥ ] 9 ॥

पक्षद्वये निश्रिता हि जानता उपलभ्यते [ भ्यन्ते ] ।
प्रमत्ता विषयेष्वे [ 6 ] व मिथ्या चोच्चलिता [ : ] पुनः ॥ 10 ॥

मोहेनापहृतास्ते चैव मिथ्या उच्चलितास्तु ते ।
तृष्णयापहृतास्ते तु प्रमत्ता विषयेषु ये ॥ 11 ॥

सहेतुकत्वाद्धर्माणां दु:खस्येह तथैव च ।
मौलं क्लेशद्वयं कृत्वा द्वादशांगो द्विधा कृतः ॥ 12 ॥

स्वयं कृता क्रिया नैव तथा परकृता न च ।
परः क्रियां न कारयति न च नास्ति क्रिया पुनः ॥ 13 ॥

नाध्यात्मं न बहिर्धा च नान्तराले तयोरपि ।
अनुत्पन्नो हि संस्कारः कदाचिदुपलभ्यते ॥ 14 ॥

उत्पन्नो[ऽ]पि च संस्कारः तेनासौ नोपलभ्यते ।
अनागतं निर्निमित्तं अतीतं च विकल्प्यते । 15 ॥

कल्प्यते तु भूतं च नानुपरं नैव च मोहयेत् ।
न परो मोहयत्येनं न च मोहो न विद्यते ॥ 1 ॥

अयोनिशो मनस्कारो [ रः ] सम्मोहो ज [ ा ] यते स च ।
अयोनिशमनस्कारो नासंमूढस्य ज [ ा ] यते ॥ 17 ॥

पुण्या अपुण्या आनिज्य [ पुण्यापुण्यानिञ्ज्या ] संस्कारास्त्रिविधा मताः ।
त्रिविधं चापायिकं कर्म सर्वमेव संगतं ।
प्रभंगुरा वर्त्तमाना अतीता न क्वचित्स्थिता [ : ] ॥ 18 ॥

अज [ ा ] ताः प्रत्ययाधीनाः चित्तं चास्यानुवर्त्तकम् ।
आत्यन्तिकः संप्रयोगो विप्रयोगस्तथैव च ॥ 19 ॥

न च सर्व्वं हि सर्व्वस्माच्चित्तं चोपगम्यते ।
तस्मिन् स्रोतस्यविच्छिन्ने सदृशासदृशे पुनः ॥ 20 ॥

आत्मदृष्ट्यनुसारेण [ 2 ] संवृतिः क्रियते त्वियं ।
भिद्यते रूपकायश्च नामकायोपि नश्यति ॥ 21 ॥

स्वयं कृतोपभागश्च परत्रेह निरुध्यते ।
पौर्वापर्येण जन्यत्वान्सहेतुफलप्रं [ सं ] ग्रहात् ॥ 22 ॥

स एव च कर्त्ता वेत्ता च अन्योवेति न कथ्यते ।
हेतुवत्सानुपच्छेदात्सामग्र्या वर्त्तते क्रिया ।
स्वस्माद्धेतोश्च ज [ ा ] यन्ते कुर्व्वन्ति च परिग्रहः [ हम् ] ॥ 23 ॥

प्रपञ्चाभिरतिर्हे [3] तुः तथा कर्म शुभाशुभं ।
सर्वबीजे [ा] विपाकश्च इष्टानिष्टं तथा फलं ॥ 24 ॥

सर्वबीजो [जे] विपाके हि ज [ा]यते आत्मदर्शनं ।
प्रत्यात्मवेदनीयो [ऽ] सौ अरूपी अभिदर्शनः ॥ 25 ॥

कल्पयन्त्यन्तरात्मानं तं च बाला अज[ा]नकाः ।
आत्मदर्शनमाश्रित्य तथा बह्व्यश्च दृष्टयः ॥ 26 ॥

पिण्डग्राहात्सबीज [ा] च्च पूर्व्वाभ्यासात्सहायतः ।
श्रवणादनुकूला [4] च्च जायते आत्मदर्शनं ॥ 27 ॥

रत्येहः मोहस्तत्प्रत्ययश्चैव अध्यात्ममुपज[ा]यते ।
अनुग्रहो[ऽ]भिलाषश्च बहिः सहोपमायितं ॥ 28 ॥

यतो विभेति लोको[ऽ]यं तन्मोहात्संहरत्यसौ ।
पूर्व्वं निवेशनं कृत्वा तेनोपैति प्रपञ्चितं ॥ 29 ॥

यत्तन्त्विवेशनं कृतं तदार्या दुःखतो विदुर [:] ।
येन दुखिता [:] सदा बालाः क्षणमात्रा [5]नुपयमितो नहि ॥ 30 ॥

नहि वैषम्यपरिगतं चित्तमाचिनोति दुःखं तथाविधं ।
यदाचित्तं भवति बालानामहंकारसुखदुःखप्रत्ययं ॥ 31 ॥

यत्र सक्ताः सर्वबालिशाः सत्काम [य] हतिकुंजरो [रः] ।
यथा स मोहस्तत्र चाधिकः सर्वभंगः सर्वचेष्टिते तत्परः ॥ 32 ॥

सर्वस्रोतसां विनिर्भेदाय यानि लोके स्रोतान्सि [तांसि] विषयाणि ।
नैतदग्निर्न वायु [6]र्न भास्करो विशोषयेत् ॥ 33 ॥

अन्यत्र धर्मचर्यया दुःखी दुःखितो[ऽ]हमस्मीत्यात्मानं ।
सुखितो वा पुनर्दुःखं व्यवस्यति परिकल्पो [ल्पः] ॥ 34 ॥

दृष्टिसमुत्थापनः [ा] स तस्माज्जातंस्तज्जनयत्यपि ।
सहोत्पन्ननिरुद्धं हि क्लेशैः क्लिष्टं मनः सदा ॥ 35 ॥

न तदुत्पद्यते पश्चाच्छुद्धमन्यन्न [7] ज [ा] यते ।
तच्च पूर्व्वसमं क्लिष्टं क्लेशेभ्यो मुक्तमुच्यते ॥ 37 ॥

यत्क्लिष्टं तदिहात्यन्ताच्छुद्धं प्रकृतिभास्वरं ।
न चेह शुध्यते कश्चित्कुतश्चिद्वापि शुद्ध्यति ॥ 38 ॥

सर्वबीजसमुद्घातात्सर्वक्लेशपरिक्षयात् ।
तत्रैव चास्य संक्लेशो द्विधा भिन्नं प्रदर्शितं ॥ 39 ॥

प्रत्यात्मवेदनीयत्वाद्दुःखमात्रपरिक्षयात् ।
तच्चैव निः प्र [निष्प्र] पञ्चत्वात्सर्व्वथा न प्र [8] पञ्चयेत् ॥ 40 ॥

प्रवाहो [हः] पुद्गलाख्या स्याद्धर्मसंज्ञ[ा] च लक्षणः ।
न चेह कश्चित्संसर्ता निर्यात्यपि न कश्चन ॥ 41 ॥

## तत्र आभिप्रायिकार्थगाथाव्यवस्थानतः

अथ खलु ब्रह्मा सहां पतिर्येन भगवांस्तेनोपसंक्रान्त
उपसंक्रम्य [1] भगवतः पादौ शिरसा ॥

वन्दित्वा एकान्ते न्यषी [द] [1]देकान्ते निषण्णो ब्रह्मा सहांपतिर्भगवन्तं गाथाभिर्गीतेन प्रश्नं पृच्छति स्म ।

शिक्षासु पारमिप्राप्तः स न स श य नाशकः [संसाराशयनाशकः] ।
शिक्षां प्रब्रूहि मे पृष्टो या च शिक्षा सुशिक्षणा ॥ 1 ॥

अधिशीलमधिचित्तं च अधिप्रज्ञञ्च मारिष ।
तिस्रः शिक्षाः समासेन शृणु या तासु शिक्षणा ॥ 2 ॥

भवेत्येतं गमं [2] पन्नश्चतुः स्थितिसुखान्वितः ।
चतुर्षु चतुरांकारज्ञ [ा] नशुद्धः सदा भवेत् ॥ 3 ॥

सुप्रतिष्ठितमूलः स्याच्चित्तस्योपशमे रतः ।
संयुक्तो [ऽ] विसंयुक्तो [ऽ]थ दृष्ट्यार्यपापया ॥ 4 ॥

आदिशुद्धे ध्यानरतः सत्ये च कुशलो भवेत् ।
उत्पादयेद्वर्ज [र्ध] येद् बृंहयेत्सत्यमेव च ॥ 5 ॥

मिथ्यालौकिकश्रावकः प्रत्येकबुद्धगतयश्चतस्रः पुनः ।
पुनर्मिथ्यालौकिकशैक्षा गतयः [3] चतस्रः ।
पूर्वे वर्जयेदुत्तरे समुदानयेत् ॥ 7 ॥

शिक्षापदेषु विद्यन्ते चतस्रो गतयस्त्रिषु ।
वर्जयित्वा द्वे गती द्वे गती समुदानयेत् ॥ 8 ॥

द्वे द्वे प्रत्युपस्थाने एका निर्वाणगामिनी ।
अनुपूर्व्वोपनिषदभिन्नासंभिन्नभाविता ॥ 9 ॥

निष्कौकृत्यो भवेदादौ पश्चाच्च सुखितो यतः ।
आद्य[ा]सौ सर्वशिक्षाणां यत्र शिक्षेत पण्डितः ॥ 10 ॥

यतौ विशोधयेज्ज्ञ [ा] नं शुभो [4] त्पत्तिसुखान्वितः ।
मध्यासौ सर्व्वशिक्षाणां यत्र शिक्षेत पण्डितः ॥ 11 ॥

यतो विशोधयेच्चित्तं प्रपंच च निरोधयेत् ।
श्रेष्ठासौ सर्वशिक्षाणां यत्र शिक्षेत पण्डित [:] ॥ 12 ॥

अशुभगामिनी प्रतिपत्तथा सुगतिगामिनो ।
आभ्यां प्रतिपदुक्तेयं सा च निष्केवला मता ॥ 13 ॥

विशुद्धिगामिनो प्रतिपन्न सर्व्वात्यन्तगामिनी ।
प्रतिपदुक्तेयं [5] सापि निष्केवला मता ॥ 14 ॥

विशुद्धिगामिनी प्रतिपद् या सर्व्वात्यन्तगामिनी ।
श्रेष्ठा प्रतिपदुक्तेयं सा चैवाद्वयकेवला ॥ 15 ॥

शिक्षेत यो न शिक्षेत उभौ तौ पण्डितौ मतौ ।
शिक्षेत यो न शिक्षेत उभौ तौ बालसम्मतौ ॥ 16 ॥

परिग्रहपरित्यागाद्दौष्ठुल्यापगमात्तथा ।
प्रत्यक्षत्वाच्च ज्ञेयस्य शिक्षादानं त्रिधा भवेत् ॥ 17 ॥

सालम्बना च सूक्ष्मौ [मौ] दारि [6] कसहता ।
साभादानप्राविवेक्यघोष आभोगसंहृता ॥ 18 ॥

एक एका भवेच्छिक्षा सद्वितीया परा भवेत् ।
एक [ा] स्यात् सतृतीयैव तां बुधः समतिक्रमेत् ॥ 19 ॥

अभ्रष्टशीलः शिक्षासु प्रतिज्ञेयगतो भवेत् ।
अगर्हितसामचारः पञ्चस्थानविवर्जितः ॥ 20 ॥

अनापत्ताथ व्युत्थाता निष्कौकृत्यो[ऽ]थ कौकृती ।
शिक्षां मार्गयेत्तत्र प्रतिपद्येत भावतः ॥ 21 ॥

प्रत्याख्यानं न कुर्व्वीत जीवितार्थं न नाशयेत् ।
प्रतिपत्तौ स्थितो नित्यं प्रवृत्तविनयो भवेत् ॥ 22 ॥

प्रतिज्ञ [ $1^0$ ] शोधयेत्पूर्व्वमाजीवमपि शोधयेत् ।
अन्तद्वयं वर्जयित्वा प्रणिधानं विवर्जयेत् ॥ 23 ॥

अन्तरायकरान्धर्मान्नाभि··[ श्रये ? ] त्कथंचन ।
चित्तक्षोभकरान्धर्मानुत्पन्नान्नाधिवासयेत् ॥ 24 ॥

नाति [ 8 ] लीनो नातिसृतः सदा सूपस्थितस्मृतिः ।
मौलसामन्तकैः शुद्धं ब्रह्मचर्यं चरेदपि॥ 25 ॥

भवेदारब्धवीर्यश्च नित्यं दृढपराक्रमः ।
निषेवताप्रमादञ्च पंचा [ ङ् ] गं सुप्रतिष्ठितं ॥ 26 ॥

भवेत्संछन्नकल्याणः तथा विवृतपापकः ।
लूहेन वा प्रणीतेन··················[1] ॥ 27 ॥

विजह्यात्क्लेशदौष्ठुल्यं प्रहाणे च रतो भवेत् ।
मीमान्स( मांस )कः स्यान्निमित्ते प्रयोगपरमो भवेत् ॥ 28 ॥

कुर्याच्च कामवैराग्यं रूपवैराग्यमेव च ।
सत्याभिसमयं कुर्यात्सर्व्ववैराग्यमेव वा ॥
दृष्टधर्मे च निर्वाया ( णा ) तथा उपधिसंक्षयात् ॥ 29 ॥

[ ३ ] **तत्र शरीरार्थगाथा व्यवस्थानतः ।**

पापं न कुर्यान्मनसा [ 2 ] न वाचा कायेन वा ।
किं च न सर्वलोके रिक्तः कामैः स्मृतिमान् ।
संप्रजनं ( सम्प्रजानन् ) दुःखं न सेवेतानर्थसंहितम् ॥ 1 ॥
इतिगाथा/संहितमिति गाथा ॥ [2].

1. MS. Photo indistinct.
2. MS. reads : संहितमिति गाथा ; The gāthā -portion of the text breaks off here. The portion hereafter contains verses and commentary,

पञ्चमं परिशिष्टम्

**APPENDIX—V**

# श्रावकभूमिवर्णितविषयानां सूची

# ANALYTICAL CONTENTS OF THE ŚRĀVAKABHŪMI

## प्रथमं योगस्थानम्

पिण्डोद्दानम्—उद्दानम्

**गोत्रभूमिः**—[ स्वरूपम् ]—गोत्रम्—गोत्रस्वभावः ।

गोत्रव्यवस्थानम्—परिनिर्वाणधर्मकाणां पुद्गलानां परिनिर्वाणाप्राप्तौ चत्वारो हेतवः—अक्षणोपपन्नत्वम्—प्रमत्तदोषत्वम्, आवृतदोषत्व । परिनिर्वाणधर्मकपुद्गलानां परिनिर्णाणप्राप्तौ चत्वारो हेतवः—बुद्धानामुत्पादः, सद्धर्मश्रवणम्, आनुलोमिक उपदेशः, अनुशासनप्राप्तिः ।

**प्रधानः प्रत्ययः**—सद्धर्माधिपतेयः परतो घोषः, योनिशो मनस्कारः

[ प्रथमे परिशिष्टे गोत्रभूमिर्द्रष्टव्या ] ।

**हीनप्रत्ययः**—

(i) **अत्मसम्मत्**—

मनुष्यत्वम् 5, आर्यायतने प्रत्याजातिः 5, इन्द्रियैरविकलता 6, आयतनगतः प्रसादः 6, अपरिवृत्तकर्मान्तिता 6 ।

(ii) **परसम्पत्**—7—

बुद्धानामुत्पादः 7, देशितानां धर्माणामवस्थानम् 7, अवस्थितानां धर्माणामनुप्रवर्तनम् 8, परतः प्रत्यनुकम्पा 9, कुशलो धर्मच्छन्दः 8, प्रव्रज्या 9, शीलसंवरः 9, इन्द्रियसंवरः 9, भोजने मात्रज्ञता 10, जागरिकानुयोगः 10, सम्प्रजानद्विहारिता 11, प्राविवेक्यम् 12, निवरणविशुद्धिः 13, समाधिसन्निश्रयः 14, उक्तधर्माणां प्रयोगविवरणम् 15-16 । गोत्रस्थस्य पुद्गलस्य लिङ्गानि 16-19 । अपरिनिर्वाणधर्मकपुद्गलस्य लिङ्गानि-16-19 ।

**तृष्णा**—16—

तृष्णा 16, निर्वाणाधिममे प्रमादः संवेगानुत्पादश्च 16-17; दुःखापत्राप्यम् 17, चतुःसत्यदेशनानवधानम् 17-18; प्रव्रज्याभावः 18, कुशलकर्माणि भोगाभिप्रायिकाणि 18-19 ।

**गोत्रस्थाः पुद्गलाः 19—**

गोत्र एव स्थितः 19, अवतीर्णो न निष्क्रान्तः 19-20, अवतीर्णो निष्क्रान्तः २०, मृद्विन्द्रियः 20, मध्येन्द्रियः 20 तीक्ष्णेन्द्रियः 20-21, रागचरितः 21, द्वेषचरितः 21, मोहचरितः 21, अक्षणोपपन्नः 21, मिथ्याप्रतिपन्नः 21, अमिथ्याप्रतिपन्नः 21, आवृतः 21, अनावृतः 21, दूरे 21, आसन्ने 21, परिपक्वः, अपरिपक्वः, विशुद्धः, अविशुद्धः, उद्दानकारिका।

**अवतारभूमिः**

स्वरूपम्, अवतारस्वभावः।

**अवतारव्यवस्थानम्—**

गोत्रम्, अवतारः, विपाकः ( बिपक्वीकरणम् ), अवतारः ( अवतीर्ण ) एव भवति विपक्बीकरणमेव च न भवति विपाकोऽपि न भवति, अवतारोऽपि भवति विपक्वोकरणमपि न भवति विपाको न भवति।

अवतारोऽपि भवति परि [ वि ] पाकोऽपि भवति अविपक्वोकरणं न भवति अवतारोऽपि न भवति विपक्वोकरणमपि न भवति विपाकोऽपि न भवति। पुद्गलस्याावतारः परिपच्यमानस्य सभागो न भवति। [ प्रथमे परिशिष्टे 'अवतारभूमिः' द्रष्टव्या ]।

**षड् अवतीर्णाः पुद्गलाः 25—**

भव्य एव पुद्गलः 25, मृदुकुशलमूलसमन्वागतः 25, मध्यकुशलमूलसमन्वागतः 26, अधिमात्रकुशलमूलसमन्वागतः 26, निष्ठाप्रायोगिकः 26, निष्ठागतः 26, भव्यजातीयः, 26, एतेषां भूमिप्रयोगभेदाद् भेदः-26-27, अवतीर्णानां पुद्गलानां परिनिर्व्वाणकालः, 27-28

**अवतीर्णस्य पुद्गलस्य लिङ्गानि 28—**

न सद्यः प्रव्रजति 28-29, न विसंयुक्तो भवत्यपायक्षणगमनीयैः क्लेशैः 29, न चाक्षणेषूपपद्यते 29-30, बुद्धधर्मसङ्घगुणाञ्छ्रुत्वा चेतसः प्रसादमुदारं होमादीनि च लभते 30, प्रकृत्यैव तीव्रेण ह्रीव्यपत्राप्येण समन्वागतो भवति 30, छन्दिको भवति 30, दृढारम्भो भवति 30, मन्दरजस्कजातीयो भवति 31, असंलीनचित्तोऽधिमुक्तिबहुलो भवति 31, मृद्वादिभेदेनैतेषां लिङ्गानां विभागः 31-32।

## परिशुद्धस्य शीलसम्वरस्य दशानुशंसा :—

**अविप्रतिसारं लभते यावद्विमुच्यते**—59-63

अविप्रतिसारिणो भद्रकं मरणं भवति 60, कल्याणो वर्णः यशः शब्दश्लोको-निश्चरति 60-61, सुखं स्वपिति सुखं प्रतिबुध्यते 61, सुप्तोऽपि देवानां रक्ष्यो भवति 61, न शंकी भवति 61, बधकानां रक्ष्यो भवति 61, यक्षाणां रक्ष्यो भवति 61, अल्पकृच्छ्रेण धर्मेण परतो लाभं लभते 61-62, शुद्धत्वाच्छीलस्य यथेच्छं देवानां सभागतायामुपपद्यते 62, अत्यन्तनिष्ठनिर्वाणमधिगच्छति 62-63 ।

**इन्द्रियसंवरः** 63-71

उद्दानम् 63-64, इन्द्रियैर्गुप्तद्वारो विहरति 64, आरक्षितस्मृतिर्भवति 64-65, निपकस्मृतिर्भवति 65-66, स्मृत्यारक्षितमानसो भवति 66, समावस्थावचारको भवति 66-67, न निमित्तग्राही भवति नानुव्यञ्जनग्राही 67-69, ये धर्मा अनुस्रवन्त्येव चित्तं तेषां संवराय प्रतिपद्यते 67, अकुशलधर्माः 69, कथमेते चितमनुस्रवन्ति 70-71 ।

**समासार्थः**, 71-72

केन संवृणोति 71, कुतः संवृणोति 71, कथं संवृणोति 71-72; का पुनः संवृतिः 72 ।

**पुनरपरः समासार्थः** 72-75

संवरोपायः, संवरणीयं वस्तु, संवृतिश्च 72, प्रतिसंख्यानबलसंगृहीत इन्द्रिय-सम्वरः 72-73, भावनाबलसंगृहीत इन्द्रियसम्वरः 73, भोजने मात्रज्ञता ( विस्तरविभागः ) 73-74, प्रतिसंख्यायाहारमाहरति 74-75 ।

**तत्र त्रय आदीनवाः**—75-83 ।

परिभोगान्वयः 75-76, विपरिणामान्वयः 76-78, पर्येषणान्वयः ( षड्विधः-समुदानना-आरक्षा-स्नेहपरिभ्रंश-अतृप्ति-अस्वातन्त्र्य-दुश्चरितकृतः ) 78-81, आहारस्यानुशंसमात्रा 81, आहारनिः सरणार्थमैव पुत्रमान् धर्ममाहारमाहरति 81-82, कत्तमैराकारैः परिशुद्धोऽनवचत्वार आहाराः 84-85 । [ द्य आहारः, 83-84 ।

## द्वितीयं योगस्थानम्

**भावनाफलम्**—331-334 ।

चत्वारि श्रामण्यफलानि 331, श्रामण्यम् 331, फलम्-331 - स्रोतआपत्ति०—331-32, सकृदागामि० 333, अनागामि० 333, अर्हत्त्व० 333 ।

**पुद्गलानां चरितविशोधनम्** 334-38 ।

रागचरितपुद्गलस्य लिङ्गानि 334, समभागचरितस्य मन्दरजस्कस्य च पुद्गलस्य लिङ्गानि 334-35, त्रीण्यावरणानि-335—कर्मा०, 335, क्लेशा० 335, विपाका० 335-36, सम्भारः—पुण्य० 336-37, ज्ञान० 337, पूर्व्वकः 337, दृष्टधार्मिकः 337 प्रसादबहुलता 337, मेधा 337, कृतपुण्यता 338, गुणान्वितता 338 ।

**षट्पुद्गलापर्यायाः** 338 ।

श्रमणाः 338-40, चत्वारः—मार्गजिनः 338-40, मार्गदेशिकः 338-40, मार्गजीवी 338-40, मार्गदूषी 338-40, ब्राह्मणाः ( त्रयः ) 340, जातब्राह्मणः 340, संज्ञाब्राह्मणः 340, प्रतिपत्तिब्राह्मणः 340-41, ब्रह्मचारिणः ( त्रयः ) 341, विरतिसमाहायी 341, तदन्तरप्रहायी 341, तदत्यन्तप्रहायी 341, भिक्षवः 341, पञ्च 341,—प्रतिज्ञाभिक्षुः 341, संज्ञाभिक्षुः 341, भिन्नक्लेशत्वाद् भिक्षुः 341, ज्ञप्तिचतुर्थेन कर्मणोपसम्पादितो भिक्षुः 341।

**यतयः** 341-42 ।

त्रयः 341, दौःशील्यसंयमात् 341, विषय० 341, क्लेश० 341, द्विविधः क्लेशसंयमः-341-42,पर्यवस्थानसंयमः 342, उभयसंयमः 342 ।

**प्रव्रजितौ द्वौ**—342-431 ।

स्वाख्यातधर्मविनयः 342-43, दुराख्यातधर्मविनयः 342-43 ।

**चत्वारो माराः** 343—

स्कन्ध०-344, क्लेश० 344, मरण० 344, देवपुत्र० 345 ।

**संबहुलानि मारकर्माणि** —343, 345-47 ।

चतुर्भिः कारणैः सम्यक्प्रयुक्तस्याप्यारम्भो विफलो भवति 347-48, उद्दानम् 348 ।

## तृतीयं योगस्थानम्

**आवरणविशुद्धिः**—398-99 ।

तत्र चत्वारि कारणानि 398

स्वभावपरिज्ञानम् 398, निदानम् 398, आदीनवपरिज्ञानम् 398, प्रतिपक्ष-भावना 398, आवरणस्वभावः 398-99, चत्वार्यावरणानि 398, परितमना 398-400 निवरणं 398, 391, आदीनवः 400, प्रतिपक्षः 400-401, वितर्कः 398, आत्मसंप्रग्रहः 399 ।

द्वौधर्मा अन्योऽन्यं प्रतिबद्धौ—

चित्तैकाग्रता 402, प्रत्यक्षज्ञानोत्पत्तिः 402, कियता अशुभाप्रतिलब्धो भवति 402-403, शमथविपश्यनयोः युगनद्धवाही मार्गः 404-405, अनन्तरोद्दानम् 405 । मनस्कारभावना—( स्वल्पभावना—) 405-406, चतुर्भिर्मनस्कारैः प्रहाणाभिरतिमेकाग्रतां च अधिगच्छति 406, चित्तसन्तापनेन 406, चित्ता-भिष्यन्दनेन 406, प्रश्रब्धिजनकेन 406-407, ज्ञानदर्शनविशोधनेन च 407, संवेजनीयानि स्थानानि ( चत्वारि )—407, आत्मविपत्तिः 407, परविपत्तिः 407, आत्मसम्पत्तिः 407-08, परसम्पत्तिः 407-8 ।

**अभिप्रमोदनीया धर्माः** 408-34 ।

अभिप्रमोदनाधिष्ठानम् 408, रत्नानि 408, शिक्षापदपारिशुद्धिः 408, कथं शिक्षापदपारिशुद्धं, शीलपारिशुद्धं अनुस्मरंश्चित्तमभिप्रमोदयति 408-9. कथमात्मनः अधिगमसंभावनामधिष्ठाय चित्तमभिप्रमोदयति 409, अपरो विशेषः 409-411, कथमादिकर्मिकः मनस्कारभावनायां विनियुज्यते 411-415, निमित्तानि ( दश ) 415-17, वितर्का ( अष्टौ ) 415-17, उपक्लेशाः ( पञ्च ) 415-17, जनपदकल्याणी दृष्टान्तः 417-426, अशुभाप्रयुक्तो योगी योगज्ञेनाचार्येण सम्यक् चोदितः सम्यक्प्रतिपन्नः कान्धर्मानधिमुच्यते 426-429, तत्रेदंप्रत्ययताप्रतीत्यसमुत्पाद आदिकर्मिकः श्रुतचिन्ताधिपतेयेन परिकल्पितं च निमित्तमुद्गह्यात्यन्येषां सत्त्वानामज्ञानम् 429-30, धातुप्रभेदप्रयुक्तं आदि-कर्मिको बहिर्धा धातुनिमित्तान्युद्गृह्य तांस्तान् धर्मानधिमुच्यते 430-33, तत्र आदिकर्मिकः समनस्कारो भवति 433, तस्य लिङ्गानि 433-34, पिण्डोद्दानम् 434 ।

## चतुर्थं योगस्थानम्

## INDEX I

## उद्धरणानामनुक्रमः

## QUOTATIONS

INDEX—II

## कारिकाणामनुक्रमः

## INDEX OF VERSES



---

INDEX III

# INDEX OF IMPORTANT SANSKRIT WORDS